# बुधरञ्जनी

राष्ट्रियसंस्कृतविद्यापीठपत्रिका

1995-96



## राष्ट्रियसंस्कृतविद्यापीठम्

तिरुपति

# बुधरञ्जनी

(राष्ट्रियसंस्कृतविद्यापीठपत्रिका)







# राष्ट्रियसंस्कृतविद्यापीठम्

तिरुपतिः

1995-96

# BUDHARANJANI

## MAGZINE OF

RASHTRIYA SANSKRIT VIDYAPEETHA

TIRUPATI







**RASHTRIYA SANSKRIT VIDYAPEETHA**

TIRUPATI.

1995-96



**Prof. Ramaranjan Mukherjee**
*Chancellor*



**Prof. S.B. Raghunathacharya**
*Vice-Chancellor*



**Dr. K.V. Ramakrishnamacharyulu**
*Registrar I/c*



**Sri S. Anand**
*Finance Officer*



**EDITORIAL BOARD MEMBERS**



**VAGVARDHINI PARISHATH**
*Conveners and Secretaries*

## CONTROLLOR OF EXAMINATIONS



**Dr. K.E Govindan**
[upto 19-04-1996]



**Dr. S. Satyanarayana Murthy**
[from 22-04-1996]

## DEANS



**Dr. L. N. Bhatta**



**Dr. M.L.N. Murthy**



**Dr. S. Satyanarayana Murtl**



**Dr. P. Subbarayan**
[upto Feb. '96]



**Dr. K. Hymavathisam**
[from Feb. '96]

## CHAMPIONS OF VIDYAPEETHA



**Ramakanthmishra**
*Acharya Level*



**Venkatesa Murthy**
*Sastri Level*



**Viswanatha Swamy**
*Prak-Sastri Level*



**T. Tandava Krishna**
*Sports Men Champion*



**P. Subhadra**
*Women Champion*

# राष्ट्रियसंस्कृतविद्यापीठम्,

तिरुपतिः



**प्रो. एस्. बी. रघुनाथाचार्यः**
कुलपतिः

# कल्याणवाचिकम्

*भगवतो वेङ्कटाचलपतेः पादमूलप्रतिष्ठितमिदं राष्ट्रियसंस्कृतविद्यापीठं दक्षिणभारते सार्वविध्यमग्रगामित्वं भजतेतराम्। सर्वेषामपि विश्वविद्यालयानां प्रधानाङ्गभूताश्छात्रा एव। अतस्तेषां योगक्षेमयोर्विचिन्ता यत्र दृश्यते तादृशविश्वविद्यालयस्य ख्यातिरल्पीयस्येव काले सर्वत्र व्याप्नोतीत्यत्र नास्ति गन्धो विचिकित्सायाः। अनयैव शुभदृशा विद्यापीठेऽस्मिन् वाग्वर्धिनीपरिषत् समस्थापि। छात्राणां भाषणपाटवसपादनमस्या मुख्यं लक्ष्यम्। आरम्भात्प्रभृत्यद्य यावद् बहूपकृताश्छात्राः परिषदाऽनया। भारतस्य कोणे कोणे प्रचाल्यमानासु भाषणप्रतियोगितासु शास्त्रार्थगोष्ठीषु वा भागं गृह्णन्तो विजयिनः समायान्ति विद्यापीठस्यास्य छात्रा इत्यत्र निदानं परिषदः प्राध्यवसाय एव।*

*वाक्यार्थसभासु भाषणस्पर्धासु वा छात्राणां स्ववाक्पटुतैव नालं, किन्तु तेषां रचनाशक्तिरपि संवर्धनीयेत्यालोच्य वार्षिकी पत्रिकेयं समारभ्यत। न केवलमियं पत्रिका विद्यार्थिनां निबन्धानां वेदिकाऽपि च तन्मार्गनिर्देशकत्वेनाध्यापकानामपि। 'बुधरञ्जनी' ति नामैव माहात्म्यमस्या बोबुधीति। न्यायादि प्राचीनशास्त्रीयाः, आधुनिकसामाजिकाः, भक्तितत्त्वप्रबोधकाः, विमर्शनात्मकाध्ययनपराश्च निबन्धा भाषाचतुष्टयं समाश्रित्य प्रवृत्ताः पत्रिकायामस्यमिति मोदः प्रमोद आनन्दः।*

*डा. जे.रामकृष्णमहोदयानां प्रधानसंपादने सुशोभितेयं "बुधरञ्जनी" तदीयां श्रद्धां गमयतीति मोमुद्यतेऽस्मत्स्वान्तम्। सम्पादकसमिति सदस्यानां समेषां हार्दान्यभिनन्दनानि। पत्रिकेयमन्वर्थाभिधाना चिरं जीयादिति सप्रश्रयं समभ्यर्थयामः श्रियःपतिम्।*

# बुधरञ्जनीप्रशस्तिः

**रमाकान्तमिश्रः**
आचार्य द्वितीयवर्षः

विद्यापीठमिदं सदा विलसितं वैदुष्यपूर्णैर्जनैः
क्षेत्रेऽस्मिन् खलु शोभतेऽद्यमहितं गीर्वाणवाणीस्थलम्।
तस्मिन्सम्प्रति संस्कृतस्य महिमा संवर्ध्यते शोभनैः
शास्त्रैर्नाट्यविनोदनैस्तदखिलं सप्ताचलायार्प्यते॥ ॥१॥

विष्णोः पूर्णकृपाकटाक्षरचितं यत्रास्ति काम्यं सुखं
वाणी यत्र सदा सुखेन नितरां प्रेम्णा नरीनृत्यते।
विद्या यत्र मनोविनोदभवने स्नेहेन विद्योतते
सर्वं संस्कृतवाङ्मयं तिरुपतौ पुण्यस्थले राजते ॥ २ ॥

गीर्वाणार्चितपद्मनाभनिलयस्सप्ताचलश्शोभते
ज्योत्नालिङ्गितचैत्रमासरजनी चामोदयन्ती यथा।
नानाशास्त्रसुमैर्यथा परिमलै राराजते भारती
अध्यास्ते बुधरञ्जनी तिरुपतिं विद्वन्मनोरञ्जनी ॥ ३ ॥

# सम्पादकीयम्

**वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।**
**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥**

भारते सुप्रथितमिदं विद्यापीठं 1962 तमेऽब्दे समस्थाप्यत। भारतस्य विविधेभ्यः प्रदेशेभ्यः समागत्य अधीयानानां विद्यार्थिनामध्ययननिलयोऽयं "लघुभारत" [Mini India] शब्देन विख्याति । तत्तच्छास्त्रपारदृश्वभिर्बहुभिर्महद्भिः संरक्षितं संस्कृतोद्यानमिदानीमपि स्वसौरभाण्याप्यायति।

कक्ष्यासु पाठप्रवचनापेक्षया छात्राणां कृते विशिष्य किञ्चिद् विधेयमस्त्येवेति समचिन्ति महानुभावैस्तैराचार्यैः। तत्फलमेव 1979 तमे हायने वाग्वर्धिनीपरिषद आविर्भूतिः। विद्यापीठीयच्छात्राणां न केवलं तत्तच्छास्त्रे नैपुण्यसमुपार्जनमेव लक्ष्यमपि च वर्तमानकालिकसामान्यांशेष्वपि तेषां पर्याप्तं परिज्ञानं भवतादित्याकारिका विप्रकृष्टा दृगासीत् तेषां सुधीन्द्राणाम्। अध्यापकानां मार्गनिर्देशने तत्तद्विषयेषु शास्त्रीयेषु, आधुनिकेषु च साप्ताहिकाधिवेशनानामायोजनं, तत्र भाषणेषु विद्यार्थिनां भागग्रहणं, तद्द्वारा तेषां वाक्पाटवं समेधतामित्यपि परिषदोऽभिप्रीतिः। ततः स्वेषां, विद्यापीठस्य च यश उपचिनुतादिति च परिषदः शुभसङ्कल्पः। सङ्कल्पोऽयमसकृत् साफल्यमाप्नोदिति सानन्दं विनिवेद्यते।

विद्याक्षेत्रे स्थितानां प्रतिष्ठा तदा वर्धतेतरां यदा तेषां सन्देशपूर्णा निबन्धा ग्रन्थस्थां भवेयुः । अतश्छात्रदशात आरभ्य विशिष्टः प्रयत्नः कार्यः। अनया धिया सार्थकाभिधेया "बुधरञ्जनी" इति वार्षिकपत्रिका समुदघाट्यत । एवं च परिषदियं न केवलं विद्यार्थिनां वाग्वर्धनायैव उद्यततेऽपि च तेषां लेखनकौशलसम्पादनायापि। अत्र च पत्रिकायां विशिष्य छात्राणां, तत्प्रोत्साहनायाध्यापकानां च निबन्धाः प्रकाश्यन्ते।

संस्कृते, इतरभाषासु वा निबन्धैस्तादृशैर्भाव्यं यत्र परिमार्ष्टुं मनहांणि गुरुभूतानि (महत्त्वपूर्णानि) वाक्यानि यथा भवेयुः, यत्र च लेखकानां स्वीयमपि अनुदानं किञ्चित्स्यात् । न हि पृष्ठराशिः प्रधानं किन्तु निर्विवादाः, विलक्षणाः, प्रामाणिकाश्च सिद्धान्ता यथा प्रतिभासेरन् तथा यत्नः समाचरणीयः । यथोक्तं - गङ्गाजललवकणिकापीतेति । बुधरञ्जन्यामस्यां निबन्धानां विषये यावच्छक्ति जागरूकता समाश्रायि सम्पादकपरिवारेण। अतस्तेषां हृदयेन धन्यवादा वितीर्यन्ते। ऐषमः संस्कृत-हिन्दी -आङ्ग्ल - तेलुगु भाषासु विशिष्टानि लेखनानि समायातानि। "बुधरञ्जनी" तेषां लेखकानां शुभं कामयते।

कुलपतिचराणां बहुशास्त्रनिष्णातानां पण्डितराजानां प्रो. एन्.एस्. रामानुजताताचार्याणां शुभाशीर्भिः समारब्धायाः परिषदः सर्वेऽपि कार्यक्रमाः अस्मत्कुलपतीनां प्राच्य-पाश्चात्यविद्यातल्लजानां समुत्साहस्वरूपाणां प्रो. एस्. बी. रघुनाथाचार्यमहाभागानां प्रोत्साहनेन सुमत्रिक-फलषट्कतां भजन्त इत्यंशः साक्षिणां प्रत्यक्षभूत एव। अतस्तेषां सन्दर्भेऽस्मिन् परिपूर्णहृदयेन कार्तज्ञ्यं व्याह्रियते। बुधरञ्जनीयमाचन्द्रतारार्कं विलसत्विति, तत्र कलियुगप्रत्यक्षविबुधः श्रीनिवासः पूर्णमनुगृह्णातु इति चाशास्महे ॥

डा. जानमद्दि रामकृष्णः

# RASHTRIYA SANSKRIT VIDYAPEETHA, TIRUPATI
(DEEMED UNIVERSITY)

# A REPORT ON THE UNIVERSITY - 1995-96

**- Dr. K.V. Ramakrishnamacharyulu**
*Registrar I/c.*

A Central Sanskrit Institute which was established at Tirupati in 1961 by the Ministry of Education, Government of India, in partial fulfilment of the recommendations made by the Sanskrit Commission for the preservation and propagation of traditional Sanskrit learning and combining it with the modern methods of research, was taken over by the Rashtriya Sanskrit Sansthan, an autonomous body established in 1970 by the Ministry of Education and Social Welfare, in the year 1971. Taking into consideration its performance and activities over the last 25 years, the Government of India, in exercise of the powers conferred under Section 3 of the UGC Act, 1956, declared the Kendriya Sanskrit Vidyapeetha', as a deemed university in 1987 and it has started working as deemed university from Nov. '91. At present Prof. S.B. Raghunathacharya, is the Vice Chancellor who assumed the office on 9.5.1994.

**OFFICERS OF THE VIDYAPEETHA :**

| | |
|---|---|
| Chancellor | Prof. Rama Ranjan Mukherji |
| Vice Chancellor | Prof. S.B. Raghunathacharya |
| Registrar I/c. | Dr. K.V.R amakrishnamacharyulu |
| Finance Officer | Sri S. Anand |
| Controllor of Examinations | Dr. K.E. Govindan (upto April '96) |
| | Dr. S. Satyanarayana Murthy |

**SANKAYA PRAMUKHS (DEANS) :**

1. Dr. L.N.Bhatta, Faculty of Sahitya and Samskriti
2. Dr. S. Satyanarayana Murthy, Faculty of Veda Vedanga
3. Dr. M. L. Narasimha Murthy, Faculty of Darsanas.
4. Dr. P. Subbarayan, Faculty of Siksha Sastri (upto Feb.96) & Dr. K. Hymavathisam at present

Dr. M.L.Narasimha Murthy continued to be the cultural co-ordinator for the year 1995-96

## ACADEMIC STAFF

**Sahitya :**

| | | |
|---|---|---|
| Dr. Lakshmi Narasimha Bhatta | --- | Reader & Dean |
| Dr. S. Sudarsana Sharma | --- | Reader &Head of the Department |
| Dr. C.Laitha Rani | --- | Lecturer |

**Vyakarana :**

| | | |
|---|---|---|
| Dr. K.V. Ramakrishnamacharyulu | --- | Reader |
| Dr. S. Satyanarayana Murthy | --- | Reader & Dean |
| Dr. R. Lakshmi Narasimha Sastry | --- | Reader & Head of the Department |
| Dr. J. Ramakrishna | --- | Sr.Lecturer |

**Advaita Vedanta :**

| | | |
|---|---|---|
| Dr. P. S. Hebbar | --- | Reader & Head of the Department |
| Dr. M. L. Narasimha Murthy | --- | Reader & Dean |
| Dr. M.S.R. Subrahmanya Sarma | --- | Lecturer |

**Nyaya :**

| | | |
|---|---|---|
| Dr. K. E. Govindan | --- | Reader |
| Dr. K.E. Devanathan | --- | Sr. Lecturer & Head of the Department |

**Jyotisha :**

| | | |
|---|---|---|
| Dr. R.K. Thakur | --- | Sr. Lecturer & Head of the Department |
| Dr. Sripada Bhatta | --- | Lecturer |

**Visistadvaita Vedanta :**

| | | |
|---|---|---|
| Dr. T.V. Raghavacharyulu | --- | Sr. Lecturer & Head of the Department |
| Dr. R.S. Tripathi | --- | Sr. Lecturer |

**Siksha Sastri**

| | | |
|---|---|---|
| Dr. P. Subbarayan | --- | Reader |
| Dr. K. Hymavathisam | --- | Reader, Dean and Head of the Department |
| Sri P. Nagamuni Reddy | --- | Sr.Lecturer |
| Dr. K. Ravi Sankar Menon | --- | Sr.Lecturer |
| Dr. V. Purandara Reddy | --- | Sr.Lecturer |
| Dr. K. Nalachakravarthy | --- | Sr.Lecturer |
| Sri M.A. Naidu | --- | Sr.Lecturer in Physical Education |

**English :**

| | | |
|---|---|---|
| Dr. M. Sarada | --- | Reader |
| Smt. V. Sujatha | --- | Jr.Lecturer |

**Telugu**

| | | |
|---|---|---|
| Dr. K.V. Nagaratnamma | --- | Jr.Lecturer |

**Research Wing :**

| | | |
|---|---|---|
| Dr. Ch.P. Satyanarayana | --- | Lecturer |

**Research Assistants :**

Vacant.

**Administrative Staff :**

Sarvasree

| | | |
|---|---|---|
| P. Harikrishnama Naidu | --- | Asst. Controllor of Examinations |
| R. Souri Rajan | --- | Accounts Officer |
| T.N. Balaram | --- | Sr.P.A. to V.C. |
| M. Balaji Singh | --- | Section Officer (Admn) |
| R. Sreenivasa Murthy | --- | Section Officer (Acadamic & Pub.) |
| C. Chandra Reddy | --- | Section Officer (Accts.) |

| | | |
|---|---|---|
| C. Venkataswamy | --- | Office Assistant (Academic) |
| C.P. Venugopal | --- | Office Assistant (Acadamic) |
| K. Balasubrahmanyam | --- | Office Assistant (Admn. & Pub.) |
| Smt. M. Usha | --- | Jr. P.A. to Registrar |
| T. Govinda Rajan | --- | Jr. P.A. |
| K. Subrahmanyam Reddy | --- | U.D. Clerk (Accts.) |
| M. Ekambaram | --- | U.G. Clerk (Accts.) |
| C. Venkateswarlu | --- | U.D. Clerk (Admn.) |
| K.B.Aghorasubramanian | --- | L.D.Clerk (Estt.) |
| V. Raghunatha Reddy | --- | L.D. Clerk (Examination) |
| S. Mohan | --- | L.D. Clerk (Acadamic) |
| Smt. K. Jayalakshmi | --- | L.D.Clerk (Admn.) |

**Library :**

| | | |
|---|---|---|
| Dr. G. Gopala Reddy | --- | Librarian |
| Dr. (Mrs.) N. Latha | --- | Copyist |
| T. Munikrishna Reddy | --- | Asst. Librarian Gr.I (on leave) |
| B. Bhaskar Chetty | --- | Library Attendant |
| B. Ponnuswamy | --- | U.D. Clerk |

**Number of students admitted in various courses in 1995-96 are as follows :**

| | | |
|---|---|---|
| Prak-Shastri | I Year | 19 |
| | II Year | 19 |
| Sammanitha Shastri (B.A. Hons.) | I Year | 2 |
| | II Year | 2 |
| | III Year | 4 |
| Shastri | I Year | 21 |
| | II Year | 16 |
| | III Year | 8 |
| Acharya | I Year | 13 |
| | II Year | 21 |
| Shiksha-Shastri | | 182 |
| Shiksha-Acharya | | 8 |
| Vidyavaridhi | | 4 |
| **TOTAL :** | | **319** |

There are 20 research scholars both regular and private who are doing research for Vidyavaridhi. The University awarded Vidyavaridhi (Ph.D) for 5 scholars in this academic year, while 5 scholars have submitted their thesis.

## FACULTY OF PEDAGOGY

The Shiksha Sastri (B.Ed.) and Shiksha Acharya (M.Ed.) courses are beingh conducted by this faculty. The present strength of students is 182 in Shiksha Sastri and 8 in Shiksha Acharya, respectively.

It is planned to develop the Faculty of Pedagogy as a Centre for Advanced Studies in Education soon with the financial assistance of the Ministry of Human Resource Development.

## OTHER FACULTIES

Other faculties consist of 128 students, studying Prak-Shastri (Intermediate); Shastri (B.A.) and Acharya (M.A.) and the performance of the students in the last annual examinations had been uniformly good.

The teaching of Functional Sanskrit has been introduced as a Vocational subject in the curriculum of Shastri from this year.

The Vidyapeetha has awarded 5 Vidyavaridhi (Ph.D.) Degrees during the year to different scholars on various subjects like Sahitya, Nyaya, Vyakarana etc., and 5 scholars submitted their thesis.

The students of the Vidyapeetha represent almost the whole of the country. This year students belonging to Andhra Pradesh, Tamil Nadu, Karnataka, Kerala, Maharashtra, Orissa, Bihar, Rajasthan, Madhya Pradesh, Uttar Pradesh, Jammu & Kashmir and Delhi have been admitted.

## HEADS OF THE DEPARTMENTS

This year the following members of teaching faculty were nominated as Heads of the departments :

| | |
|---|---|
| 1. Dr.S.Sudarsana Sharma | Head of the Department of Sahitya |
| 2. Dr.R.L.N. Sastry | Head of the Department of Vyakarana |
| 3.Dr.K.E.Devanathan | Head of the Department of Nyaya |
| 4. Dr.R.K.Thakur | Head of the Department of Jyotisha |
| 5. Dr.P.S.Hebbar | Head of the Department of Advaita Vedanta. |
| 6. Dr.T.V.Raghavacharyulu | Head of the Department of Visistadwaita Vedanta. |
| 7. Dr.K.Hymavathisam | Head of the Department of Shiksha Shastra |

Dr.P.Subbarayan, Dean and Head of the Department of Shiksha Shastra went on Deputation to Sri Sankaracharya University of Sanskrit, Kalady, as Professor of Education.

## LIBRARY

The Vidyapeetha has about 47,681 titles of printed books so far on various Shastras and Modern languages and on variety of subjects. The Library subscribes to 160 periodicals and magazines of current interest. It has also about 3,000 manuscripts written in Devanagari, Grantha, Tamil and Telugu scripts, out of which 92 manuscripts were microfilmed with the grant of national Archives of India, New Delhi. The Library building has been named after

"Mahamahopadhyaya Sri Pattabhirama Sastry Library" in memory of Vidyapeetha's first Chancellor who is a scholar of national repute.

## PUBLICATIONS

The Vidyapeetha has brought 66 critically edited treatises on Veda, Vedanta, Agama, Nyaya, Vyakarana, Sahitya and other subjects. These publications include rare texts of Samaveda Brahmanas, Agama Texts, that were appreciated by the scholars in India and abroad. In the World Book Fair, 1996, the sale of the Vidyapeetha publciations has topped the other Universities.

This year a new book "Pariskara Pratibham" written by Vacaspathi Prof.N.C.V.Narasimhacharya, was released on 24th December, 1995 by the Chancellor, Prof. Ramaranjan Mukherjee. Two books **"Avayava"**, a text on Nyaya of Gangesopadhyaya with commentaries of Raghunatha, Gadadhara and Prof.N.S.R.Tatacharya, and **"Sankara darsana Marma Prakasa"** edited by Dr.M.L.Narasimha Murthy are ready for release.

## STUDENTS PARTICIPATION

1. 23 students took part in the Inter-University South Zone Youth Festival held at Madras University from 1.12.1995 to 5.12.1995.
2. M.Jayakrishna, Advaitavedantacharya II year and Sanjaya Kumar Gupta, Siksha Sastri, participated in Indira Gandhi Memorial Inter University Debate Competition held in New Delhi from 21.12.1995 to 23.12.1995 and the topic for the debate was NPT will perpetuate war more than peace.
3. Six students took part in the Annual Sastra Sadas at Government Sanskrit College, Tripunithura, Kerala from 27.12.95 to 30.12.1995.
4. K.Venkatesha Murthy, Siksha Sastri, and T.Tandava Krishna, Sastri took part in the All IndiaSanskrit Youth Festival held at Sri Lal Bahadhur Sastri Rashtriya Sanskrit Vidyapeetha, New Delhi on 10.1.1996.

## CULTURAL ACTIVITIES

The Vidyapeetha has celebrated the following functions during the year under report:

i) **Independence Day :** Prof.S.B.Raghunathacharya, Vice-Chancellor, hoisted the National Flag and spoke about the importance of preserving the culture and tradition of Shastraic learning in India.

ii) **Vinayakacaturthi :** As an annual feature, the Vidyapeetha Hostels celebrated Vinayakacaturthi, for five days from 29th August to 2nd September, 1995. On the first two days lectures were given on Shastra topics and on the remaining days cultural programmes were arranged. The festival was inaugurated by Prof. S.B. Raghunathacharya, Vice-Chancellor, on 29th August and it was followed by a lecture on **Samantakopakhyanam** by Dr. T.V. Raghavacharyulu, Senior Lecturer. On the second day, Dr. L.N. Bhatta, Dean, School of Sahitya and Samskriti, gave a lecture on **Importance of Agama Sastra**. On 31st August, Dr. A.R.V. Murthy, Assistant Professor. S.V.

Ayurveda College, Tirupati, Spoke on **Ayurveda for Common Man**. On the fourth day, various cultural programmes were held by the students of the Vidyapeetha. It was followed by **Nimajjanam** on 2nd September, 1995.

iii) **Sanskrit Day :** As an annual feature, the Vidyapeetha celebrated Sanskrit Festival for three days from 6th September5 to 8th Septembe,r 1995. The three days were celebrated as **Jagannatha** Day, **Dhanvantari** Day and **Varahamihira** Day. The festival was inaugurated by Sri T. Satyanarayana Rao, IAS Joint Executive Officer, T.T.D., Tirupati and it was followed by a lecture on **Panditaraja Jagannatha,** given by Prof. N.C.V. Narasimhacharya, former Director, Srimadbhagavata Project, T.T.D. On the second day, Dr. A.R.V. Murthy, Assistant Prof. S.V. Ayurveda College, Tirupati, delivered a lecture on **Dhanvantari**. On the third day, Prof. M. Sangamesam, Retired Professor, S.V. Arts College, Tirupati gave a lecture on **Jyotisha** and Prof. E.A.V. Prasad, Department of Geology, S.V. University, Tirupati, gave a lecture on earthquakes and sources of water in the earth using the audio-visual aids which was well appreciated.

iv) **Republic Day :** Prof.S.B.Raghunathacharya, Vice-Chancellor unflured the National Flag.

v) Besides the above functions, Laxmi Puja on the occasion of Diwali was also celebrated by the Students.

vi) **Hostel Day :** The Vidyapeetha Hostel Day was celebrated on 7th April, 1996. Dr.V.Jayarama Reddy, Registrar, S.V.University, Tirupati, was the Chief Guest. Prof.S.B.Raghunathacharya, Vice-Chancellor, R.S.Vidyapeetha, has presided over the function.

## VAGAVARDHINI PARISHAD

As an annual feature, a Parishad has been organised on 10th October, 1995 with Dr.J.Ramakrishna, Sr.Lecturer in Vyakarana and Dr.T.V.Raghavacharyulu, Sr.Lecturer and Head of the Department of Visistadwaita Vedanta as its Convenors, to develop the oratory skills of the students. The Parishad conducted 15 Seminars in this academic year. Students took part in the Elocutions to be held on various Sastras and modern language and current topics and general programmes like Asubhashanam and Quiz on every Wednesday. This year 21 prizes were awarded to meritorious candidates by our Vice-Chancellor. The Valedictory function of the Parishad was held on 6th March, 1996.

## CO-CURRICULAR ACTIVITIES

a) Scouts and Guides: The Vidyapeetha has been organising preliminary training camp in Scouts and Guides for the teacher traines of Shiksha Shastri course since 1972. These activities instill in the confidence to compete with other teachers in our educational system besides helping them to develop discipline.

b) First Aid: The teacher trainees of Shiksha-Shastri course are required to qualify themselves for a Certificate in First Aid to equip themselves to handle and teach first aid in their classroom and elsewhere. We thank the authorities of S.V.Medical College, Tirupati for their continued cooperation in conducting this programme.

c) Games and Sports: The Vidyapeetha has been regularly organising Games and Sports every year for both the students and the staff. The Vidyapeetha participated in All India Inter University Cricket Tournament conducted by S.V.University this year.

d) Yoga Classes: As a special feature, Yoga classes were started on 31st January, 1996 for the benefit of the Vidyapeetha students and staff. These classes will conclude by the end of March, 1996. Sri Siddha Reddy, Yoga Teacher, S.V. Bala Mandir and Sri Saranya Kumar, Part-Time Lecturer in History, R.S.V., Tirupati have volunteered to render their services.

Vakyartha Goshti on "Hetwa bhasa" was held on 7-2-96. Reputed scholars of various institutions who have participated in theThird Refresher course participated in the Ghosti.

On 31-12-95 Asthavadhanam in Sanskrit was also performed by Dr.D.Prabhakara Sarma of Sanskrit Oriental College, Kovvur. The staff and students of the Vidyapeetha and the participants of second Refresher course and Mimamsa Workshop participated and enjoyed the event. Prof. K.T.Pandurangi presided over the function.

## HOSTELS

The Vidyapeetha is having Two hostel buildings to accommodate about 120 students. This year 212 students were accommodated in the hostels due to the increase in the strength. Boarding facilities are also being provided to the students. Cultural and Sports activities for the inmates of the hostels are being conducted regularly.

The U.G.C. has sanctioned Rs.20.00 lakhs for the construction of Ladies Hostel building and the construction work is also started.

**Buildings :**

The construction of type IV quarters has been completed and allotted to the staff members. The quarters has been inaugerated by Prof. Ramaranjan Mukherjee, chancellor, on 3-10-1996. The proposal to construct a Ladies Hostel in the Vidyapeetha campus has been approved by the ministry/UGC. The Vidyapeetha will be in a position to provide Hostel facility to the girl students from the next academic year, 1996-97. The Vidyapeetha has organised institutional plantation programme under the aegis of T.T. Devasthanams. Nearly 4000 sapplings were planted on the Vidyapeetha campus.

**Hostel Day :**

The Vidhya Peetha Hostel Day was celebrated on 7th April, 1996. Dr. V. Jayarami Reddy, Registrar, S.V. University, Tirupati, was the Chief Guest. Prof. S.B. Raghunathacharya Vice Chancellor, Presided over the function.

**Annual Day :**

The Vidyapeetha Annual day was celebrated on 8th April 1996. Sri **T. Satyanarayana Rao,** JEO, TTD was the Chief Guest. Prof. **S.B. Raghunathacharya,** Vice-Chancellor, presided

over the function. The Chief Guest gave away the prizes to the winners of different compititions and special prizes were also given to the following students who secured highest marks in the public examinations held in 1995.

| S.No. | Name of the Candidate | Class | Year |
|---|---|---|---|
| 1. | Sachin Tripati | Prak-Sastri | II |
| 2. | Sanjai Kumar | Sastri | I |
| 3. | Sri P.V.B. Subrahmanyam | Sammanita Sastri | III |
| 4. | K. Prabhakara Sastri | Acharya | II |
| 5. | B. Umamaheswara Rao | Shiksha Acharya | |
| 6. | P. Subhadra | Shiksha Sastri | |

## UGC SEMINARS ON VARIOUS SHASTRAS

The vidyapeetha has organised two day seminar in each department.

**Seminar on Jataka Vichara:** A seminar on **Jataka Vichara** was held in the **department of Jyotisha** from 20th to 21st February, 1996. Dr. R.K. Thakur, Head, was the Convenor. Dr. M.A. Bhatta, Retired Senior Lecturer, R.S. Vidyapeetha was the Chief Guest and read a paper on **Jatake Ayur Nirnaya.** The staff in the department and Mr. Naga Muni Reddy (dept. of Pedagogy) and students took part in the seminar.

**Seminar on Dhatwartha Vichara :** The Department of Vyakarana held a two day Seminar from 26th Feb to 27th February, 1996. Sri Viswanatha Gopala Krishna Sastry, Principal, S.G.V.P.O. College, Rajahmundry, was the Chief Guest. Besides Sri Gopalakrishna Sastry, a number of reputed scholars viz., Dr.K.Satyanarayana, Dr.S.T.K.S.Rangacharyulu, Dr.S.Subrahmanyam, Dr.K.Ananta, staff in the department, local scholars and Research students took an active role. Prof.S.B.Raghunathacharya proposed to themembers to take a project on **Dhatu Kosa** which will be of much use to the learners of Sanskrit. Dr.R.L.N. Sastry, Head of the Department of Vyakarana, was the Convenor.

**Seminar on Sarira Sariri Bhava:** The department of Visistadwaita Vedanta held a two day Seminar from 28th Feb to 29th Feb '96. Prof.M.Narasimhacharya, Head, Department of Vasihnavism, Madras University, was the Chief Guest. Many erudite scholars such as Dr.V.Vasudevan, Dr.Varada Rajan, Dr.C.S.Radhakrishnan, Dr.S.V.Ranga Ramanujacharya and local scholars, Sri P.R.Rangarajan and staff in the department presented papers on various topics. Dr.T.V.Raghavacharyulu, Head of the Department of Visistadwaita Vedanta was the Convenor.

**Seminar on Kavyalakshana Vichara:** The department of Sahitya held a two day Seminar from 2nd March to 3rd March, 1996. Prof.N.C.V.Narasimhacharya, former Director of Bhagavata Project, T.T.Devasthanams, Tirupati, was the Chief Guest. Outstanding scholars such as Dr.S.V.Ranga Ramanujacharya, Sri K.V.Siva Rama Sarma, Dr.L.Lakshmi Kumara Sarma and Dr.Varaprasada Murthy besides local scholars and staff in the department presented papers on various topics and took part in the discussions. Dr.S.Sudarsana Sarma, Head of Department of Sahitya, was the Convenor.

**Seminar on Jaganmithyatva Vichara:** The department of Adwaita Vedanta conducted a two day Seminar from 4th March to 5th March, 1996. Prof.R.Vasudevan Potti, Dean, Fac-

ulty of Veda, Sri Sankaracharya University of Sanskrit, Kalady (Kerala) was the Chief Guest. Many outstanding scholars viz., Dr.R.Krishna Murthy Sastri, Prof.V.Kutumba Sastri, Dr.J.Venkata Rama Sastry and local scholars Prof.C.Ramaiah, the staff in the department and Research students read out papers and took part in the discussions. Dr.P.S.Hebbar, Head of the Department of Adwaita Vedanta was the Convenor.

**Seminar on Effective Teaching and Personality:** The department of Pedagogy held a two day Seminar from 7th March to 8th March, 1996. Prof.I.V.Chalapathi Rao, Chairman, Forum for Higher Education, Hyderabad, was the Chief Guest and read a paper on Characteristics of Effective Teaching. Many outstation scholars Prof.Venkatarami Reddy, Dr.S.Padmanabhaiah, Prof.Sukumaran Nair, Prof.P.Subbarayan, Sri Narendran and Prof.Balasubramanyam and staff of the Department read out papers and took part in the discussions. Dr.K.Hymavathisam, Head of the Department of Pedagogy was the Convenor.

**Seminar on Pratyaksha Vichara:** The department of Nyaya conducted a two day Seminar from 13th March to 14th March, 1996. Prof.D.Prahladachara, Department of Sanskrit, Bangalore University was the Chief Guest. Many outstation scholars Prof.V.Gopala Krishna Sastri, Dr.R.Krishnamurthi Sastri, Dr.S.Subrahmanyan, Prof.Haridasa Bhatt, Sri M.A.Alwar and Prof.C.Ramaiah and the staff of the Department read out papers on various topics and took an active role in the discussions.

All the seminars were inaugurated by Prof. S.B. Raghunathacharya, Vice-Chancellor.

## CONVOCATION

The First Convocation of the Rashtriya Sanskrit Vidyapeetha was held on 1st July, 1995. Sri Pranab Mukherjee, Hon'ble Minister for External Affairs and Deputy Chairman for Planning Commission, delivered the Convocation Address. **Prof.K.Satchidananda Murthy,** who was the Guest of Honour, released the first Newsletter and **Prof.Ramaranjan Mukherjee** presided over the function. In his Convocation address, **Sri Pranab Mukherjee,** pointed outthe greater responsibility of young Sanskrit scholars in rejuvenating Indian values and culture at a time when the spiritual aspect of life is at stake. It is the duty of every graduate to propagate Sanskrit learning and disseminate the knowledge therein for the welfare of humanity. The Vidyapeetha conferred the Degree of **Mahamahopadhyaya** Honoris Causa on **Prof.B.R.Sharma, Prof.K.Satchidananda Murthy, Prof.M.Manikya Sastri** and **Prof.Batukanatha Sastry Khiste** and the Degree of **Vacaspati** Honoris Causa on **Prof.N.C.V.Narasimhacharya, Prof.Kiitsu Sakakibara, Dr.Durgadas Basu** and Dr. (Smt). **Kapilavatsyayan.**

## NEW ENTRANTS

Shri J.V.S.Sita Ramanjaneya Sarma was appointed as a Computer Operator on ad hoc basis from 23rd May, 1995.

Shri T.Govindarajan was appointed as Junior Personal Assistant in November, 1995.

## FAREWELL

The Vidyapeetha bode farewell to Shri Sourirajan, Accounts Officer, on 14th Novem-

ber, 1995, on the occasion of his superannuation and the function was presided over by Prof.S.B.Raghunathacharya.

## REFRESHER COURSES

The University Grants Commission has recognised this Vidyapeetha as a Centre for conducting the Refresher Courses in Sanskrit and out of the funds received from it, the Vidyapeetha has conducted the following Courses:

The I Refresher Course was held in General Sanskrit and Pedagogy from 9th September, 1995 to 29th September, 1995. The Course was inaugurated by Prof.Y.C.Simhadri, Member, U.G.C, and former Vice-Chancellor of Nagarjuna University. Prof.M.Narasimhacharya, Member Karya Parishad delivered the Key Note Address. The Valedictory address on 29th September, 1995 was given by Prof.S.Lakshmana Murthy, Department of English, Kakatiya University, Warangal. Dr.L.N.Bhatta and Dr.K.Hymavathisam were the Co-ordinator and Addl. Co-ordinator.

The II Refresher Course was held in Sahitya from 24th December, 1995 to 13th January, 1996. The course was inaugurated by Prof. Ramaranjan Mukherjee, Chancellor, R.S.Vidyapeetham and Prof.Lakshmi Tatachar, Director Akademy of Sanskrit Research, Melkote, gave the Key Note address. Dr.S.Sudarsana Sarma, Head of Department of Sahitya and Dr.M.Sarada, Reader in English were the Co-ordinator and Additional Co-ordinator.

The III Refresher Course was held in Veda Vedangas and Darsanas from 22nd January to 10th February, 1996. The course was inaugurated by Prof.C.Ramaiah, Dean, School of Humanities and Extension Studies, S.V.University, Tirupati. Dr.S.Satyanarayana Murthy, Head of the Department of Vyakarana was the Co-ordinator and Dr.P.S.Hebbar, Reader and Head of the Department of Advaita was the Additional Co-ordinator.

All the courses were presided over by Prof.S.B.Raghunathacharya, Vice-Chancellor, R.S.Vidyapeetha. Scholars from prominent institutions were invited to participate in the Courses and the proceedings of the courses were tape-recorded.

### (1) Seminar on Functional Sanskrit

The University Grants Commission has selected the Vidyapeetha as a National Centre for training the teachers of Functional Sanskrit. As a part of it a two day seminar was organised inviting the teachers and heads of the departments where Functional Sanskrit has been taught.

The Seminar on Functional Sanskrit was held on 16th and 17th December, 1995. The Seminar was inaugurated by Prof.M.Narasimhacharya, Member, Karya Parishad, and Prof.V.Kutumba Sastry, Pondicherry, was the Chief Guest. The aim of the Seminar was to hold discussions on matters connected with introducing of Vocational courses in various subjects Functional Sanskrit of the Vidyapeetha. The Valedictory function was held on 17th December, 1995. Prof.S.B.Raghunathacharya, Vice-Chancellor, presided over the Seminar.

### (2) Workshop on Purva Mimamsa

For the first time, with the financial assistance of Indian Council of Philosophical Re-

search, New Delhi, a Workshop on Purva Mimamsa was held from 25th December, 1995 to 4th January, 1996. Prof.S.B.Raghunathacharya, Vice-Chancellor, was the Director and Dr.K.E.Devanathan, Head, Department of Nyaya was the Co-ordinator of the Workshop. Prof. Ramaranjan Mukherjee, Chancellor, inaugurated the Workshop. Dr.Ashok Vohra, Member Secretary, ICPR, was the Chief Guest and Prof.Mandan Mishra, former Vice-Chancellor, S.L.B.S.R.S Vidyapeetha, New Delhi delivered the Key Note address. About forty scholars both traditional and modern from different parts of the country participated in the Workshop. Among them Prof. Goda Subrahmanya Sastry, Prof. C. Ramaiah and Prof. D. Prahladachar presided over the discussions of Anumana, Khyati, Nirvikalpaka and Sabda concepts of Prabhakara school respectively. Other scholars had also aired their views on many significant theories of Prabhakara Mimamsa. They also highlighted the great contribution of Prabhakara to Mimamsa tradition and the theories of his school. Some of the important works like Prakarana Pancika were taken for an indepth study and analysed the concepts of akhyati and triputipratyaksa of Prabhakara School. I am happy to announce that Rashtriya Sanskrit Vidyapeetha and Indian Council of Philosophical Research, New Delhi are collaborating to tranalate rare texts in Purva Mimamsa into English as a follow-up of the Workshop on Purva Mimamsa.

The concluding session of the Workshop was held on 4th January, 1996 with Prof. C. Ramaiah, Dean, School of Humanities and Extension Studies, Sri Venkateswara University, as the Chief Guest and Prof. S.B. Raghunathacharya, Vice-Chancellor, presided over the function. Prof. V. Kutumba Sastry, Professor of Sanskrit, Pondicherry University has rendered English translations of the Lectures of traditional scholars for the benefit of English-knowing scholars. Dr. K. E. Govinda, Dr. S. Satyanarayana Murthy and Dr. M.L. Narasimha Murthy, Readers of the Vidyapeetha helped the Workshop by acting as leaders for both traditional and modern participants.

## RECORDING OF ORAL SHASTRA TRADITION

In order to preserve the Oral Traditional teaching of various Shastras, a project sponsored by the Ford Foundation of America, has been undertaken by this Vidyapeetha.

Erudite scholars from different places of India are invited and their lectures in Mimamsa and Nyaya subjects were being taperecorded covering so far 306 hours.

Action has also been taken simultaneously to transcribe the recorded tapes into edited texts so that the same may be printed for reference and preservation for posterity. A press copy consisting nearly 10,000 pages has been prepared and kept ready for printing.

8th April, 1996.

**K.V.Ramakrishnamacharyulu**

*Registrar I/c*

# विषयसूचिका



## संस्कृतविभागः

# हिन्दीविभाग



# English Section



# తెలుగు విభాగము

# ध्वनिलक्षणे महिमभट्टकटाक्षः

डा. लक्ष्मीनरसिंहभट्टः

प्रवाचकः

ध्वनिसंप्रदायस्य प्रवर्तकेन प्रथिताभिधानेन श्रीमदानन्दवर्धनेन काव्यात्मतया समाम्नातो ध्वनिः तत्परिपन्थिभिः मुकुलभट्ट-महिमभट्टप्रभृतिभिः महता पराक्रमेण निराकृतः। तत्र व्यङ्ग्यत्वेनाभिमतोऽर्थः अनुमेय इति सिद्धान्तयितुं राजानकमहिमभट्टाचार्यः व्यक्तिविवेकाख्यं ग्रन्थं निरमिमीत। त्रिभिर्विमर्शैरुपेतेऽस्मिन् ग्रन्थे प्रथमस्मिन् ध्वनिलक्षणस्य तद्भेदानां च अनुमानेऽन्तर्भावं प्रत्यपादयत् सः। तत्रैव ध्वनिलक्षणवाक्ये बहवो दोषा वर्तन्त इति महिमभट्टेन अभिप्रेतम्। प्रस्तुते निबन्धे ध्वनिमुद्दिश्य महिम भट्टप्रदर्शिता आक्षेपाः उपस्थाप्यन्ते। तत्रभवान् आनन्दर्धनाचार्यः ध्वनिलक्षणम् —

यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥

इति निर्दिशति। अत्रैव 'अर्थो गुणीकृतात्मा गुणीकृताभिधेयः शब्दो वा यत्रार्थान्तरमभिव्यनक्ति स ध्वनि' रिति वृत्तिवाक्यं संयोजयति।

एतल्लक्षणं दोषदशकयुक्तमिति महिमभट्टः विमृशति। तत्र महिमभट्टोद्भावितं प्रथमं दूषणम् —

### 1. अर्थस्य विशिष्टत्वम्

ध्वन्यालोककारेण अर्थस्य उपसर्जनीकृतात्मत्वविशेषणमुपात्तम्। एनदनुपादेयमेव। यतो वा स अर्थान्तरार्थम् उपात्तः तस्मात् तस्याप्राधान्यमव्यभिचरितमेव। व्यङ्ग्यार्थप्रतीत्यर्थमेव उपात्तस्य वाच्यार्थस्य तदुपसर्जनीकृतात्मत्वम् अकथितमपि सिद्धमेवेति यावत्। लोके अग्न्यादिसाधनाय उपादीयमानः धूमादिः न कदाचिद्व्यभिचरति। तस्य अग्न्यादिसाधनोद्देशेन प्रवृत्तत्वात्। संभवव्यभिचारयोरभावे विशेषणस्य निरर्थकतैव। तदुक्तम्- 'संभवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्' इति। संभवो नाम विशेष्ये विशेषणस्य सत्त्वम्। व्यभिचारो नाम विशेष्ये विशेषणस्य कदाचिदप्यभावः। प्रकृते उपसर्जनीकृतत्वरूपविशेषणस्य विशेष्ये अर्थे सर्वदा सत्त्वेन कदाचिदपि व्यभिचारो नास्ति। अतः अत्र अर्थान्तरमवगमयतोऽर्थस्य उपसर्जनीकृतात्मत्वस्य संभवेऽपि व्यभिचाराभावात् उपसर्जनीकृतात्मत्वविशेषणस्य सार्थकताया नैवावकाश इति व्यर्थमेतद्विशेषणम्।

ननु ध्वन्यालोके उपसर्जनीकृतस्वः इति विशेषणस्य प्रयोजनं प्रतिपादितम्। तथा हि - 'उपोढरागेण' - इत्यादिसमासोक्तौ वाच्यार्थेन प्रकृतेन अप्रकृतस्य प्रतीतिर्वर्तते। अतः समासोक्तौ अर्थान्तरमवगमयतोऽर्थस्य उपसर्जनीकृतात्मत्वं व्यभिचरितमिति उपादीयमेवार्थस्य उपसर्जनीकृतात्मत्वविशेषणमिति चेन्न। समासोक्तौ वाच्यार्थस्य प्राधान्यं प्राकरणिकत्वेनैव, न पुनः प्रतीयमानापेक्षया। तथा च वाच्यार्थस्य गुणीभावस्य अव्यभिचार एव। अतः उपसर्जनीकृतस्वः इति अर्थस्य विशेषणं व्यर्थम्।

यदि पुनः समासोक्तौ प्रतीयमानापेक्षया वाच्यार्थस्य चारुत्वदर्शनं स्वीकृत्य तत्र उपसर्जनीकृतात्मत्वव्यभिचार एवेत्यागृह्यते तर्हि उच्यते-अर्थस्य उपसर्जनीकृतात्मत्वविशेषणोपकल्पनमनपेक्षितमेव, विफलत्वात्। गुणीभूतव्यङ्ग्येऽपि काव्ये कदाचित् गुणीभूतादपि व्यङ्ग्यात् चारुत्वप्रकर्षः सहृदयैरङ्गीक्रियत एव। चारुत्वनिबन्धनश्च ध्वनिव्यपदेश इति समासोक्त्यादिषु ध्वनित्वनिरासाय ध्वनिलक्षणे अर्थस्य उपसर्जनीकृतात्मत्वकथनं निरर्थकमेव। तदयमत्र परिकरश्लोकः —

---

उक्तं गुणीकृतात्मत्वं यदर्थस्य विशेषणम्।
गमकत्वान्न तत्तस्य युक्तमव्यभिचारतः॥ इति।

ध्वनिलक्ष्मणि महिमभट्टोद्भावितं द्वितीयं दूषणम् —

**2. शब्दः**

ध्वनिकारिकायां 'शब्दः' अनुपादेयः। शब्दस्य अभिधातिरिक्तो व्यञ्जनाख्यव्यापारो विप्रतिपद्यते। यतः शब्दे अज्ञातज्ञापनमेव व्यापारः स चाभिधा व्यापारः नान्यः। स्वार्थाभिधानमात्रशक्तिकस्य शब्दस्य व्यञ्जकोक्तिर्नोपपद्यते इति लक्षणवाक्ये 'शब्दः' इति पदानुप्रवेशः दुष्टः।

ध्वनिलक्ष्मणि महिमभट्टोद्भावितं तृतीयं दूषणम् -

**3. सविशेषणः**

शब्दस्य उपसर्जनीकृतार्थत्वविशेषणमनुपादेयमेवेति महिमभट्टस्याभिप्रायः। अर्थोपसर्जनीकरणात्मकव्यापारः शब्दस्य नास्त्येव। अनुकरणशब्दानां तु स व्यापारः दृश्यते। यथा —

तं कर्णमूलमागत्य पलितच्छद्मना जरा।
कैकेयीशङ्कयेवाह रामे श्रीर्न्यस्यतामिति॥

इत्यत्र अनुकरणशब्दस्य 'रामे श्रीर्न्यस्यतामिति' इत्यस्योपसर्जनीकृतार्थत्वं भवति। तत्र हि प्रतिपाद्योऽर्थोऽनुकार्यात् रामे श्रीर्न्यस्यतामित्यस्माच्छब्दादवगतो भवति। तथा च अनुकरणशब्दानामुपसर्जनीकृतार्थता, न पुनः अनुकरणभिन्नानाम्। अनुकरणशब्दातिरिक्तानां शब्दानां तु स्वार्थाभिधानपरत्वेन गुणीकृताभिधेयत्वस्य प्रसक्तिर्नास्ति। तस्मात्तेषां वाक्यापेक्षया गुणीभावोऽव्यभिचरित एव। शब्दो ह्यर्थप्रतिपादनाय प्रयुज्यते। यो हि यदर्थमुपादीयते असौ तमेवोपसर्जनीकरोतीति वक्तुं न युज्यते। यथा उदकादेरुपादानार्थमुपात्तो घटादिस्तदेव उदकादिकं नोपसर्जनीकरोति तथा अर्थाभिधानार्थमुपात्तः शब्दः तमेवार्थं नोपसर्जनीकरोति। किन्तु स्वयमेव गुणीभवति। अतः अर्थं बोधयितुं प्रवृत्तः शब्द एव अप्रधानः न बोध्यमानोऽर्थस्तादृशः। इत्थं ध्वनिलक्षणे शब्दस्य यद्गुणीकृतार्थत्वमुक्तं तस्मिन्नंशेऽसंभावाख्यो दोषः। शब्दस्य उपसर्जनीकृतार्थत्वविशेषणमनुपादेयमेवेति यावत्।

ध्वनिलक्ष्मणि महिमभट्टोद्भावितं चतुर्थं दूषणम् —

**4. तदः पुंस्त्वम्**

ध्वनिलक्षणे 'यत्रार्थः शब्दो वा तमर्थम्' इत्यत्र 'तम्' इति तच्छब्दस्य पुंस्त्वेन निर्देशोऽनुपपन्नः। तच्छब्दस्य पूर्वप्रक्रान्तपरामर्शित्वं प्रसिद्धम्। ध्वनिलक्षणात् पूर्वं 'प्रतीयमानं पुनरन्यदेव वस्त्वस्ति' इत्यादिकारिकायां प्रकान्तं 'वस्तु' इति पदं नपुंसकलिङ्गेन निर्दिष्टम्। तल्लिङ्गमनुसृत्य ध्वनिलक्षणे तमिति स्थाने तदिति निर्देशः कर्तव्यः। अथवा पूर्वकारिकायां 'प्रतीयमानः पुनरन्य एव सोऽर्थोऽस्ति' इति पाठविपर्यासः करणीयः।

ध्वनिलक्षणे महिमभट्टोद्भावितं पञ्चमं षष्ठं च दूषणम् —

---

दातृत्वं प्रियवक्तृत्वं धीरत्वमुचितज्ञता।
अभ्यासेन न लभ्यन्ते चत्वारः सहजा गुणाः॥

5. द्विवचन 6. वा शब्दौ

ध्वनिलक्षणे वाशब्दद्विवचनयोः परस्परं विरोधः। 'यत्रार्थः शब्दो वा' इत्यत्र वाशब्दस्य विकल्पार्थकत्वात् अर्थो वा शब्दो वा इति विकल्पः प्रतीयते। लक्षणगत व्यङ्क्तः इति पदेन शब्दार्थयोः साहित्यं प्रतीयते। इत्थं वाशब्देन निरपेक्षत्वं, व्यङ्क्तः इति पदेन सापेक्षत्वमिति मिथो विरोधः। वा शब्दः विकल्पार्थकश्चेत् शब्दस्य स्वार्थातिरिक्तार्थान्तरावगमकत्वाभावात् व्यञ्जकत्वमनुपपन्नम्। कदाचित् शब्दस्य स्वार्थातिरिक्तार्थावगमकत्वेऽपि अर्थशब्दयोरुभयोरपि समुच्चयाभावात् 'व्यङ्क्तः' इत्यस्य क्रियापदस्य द्विवचनं नोपपद्यते। यतो हि यत्र वाशब्दो विकल्पार्थकः तत्र क्रियापदमेकवचनान्तम्। यथा —

परित्यक्ते देहे रणशिरसि शोकान्धतमसा
शिरः श्वा काको वा द्रुपदतनयो वा परिमृशेत्।

इत्यत्र विकल्पार्थकस्य वाशब्दस्य प्रयोगे यथा बहुवचनान्तस्य क्रियापदस्य नोपपत्तिस्तद्वदत्रापि द्विवचनान्तस्य क्रियापदस्य नास्त्युपपत्तिः; परिमृशेत् इत्येकवचनान्तक्रियापदवत् अत्रापि व्यनक्ति इत्येकवचनान्तमेव क्रियापदं संगच्छत इति यावत्।

नापि वाशब्दः समुच्चयार्थः। तस्य तदर्थत्वे यत्र शब्दार्थयोरन्यतरस्य व्यञ्जकत्वे ध्वनित्वं वक्तव्यं तत्र तन्न स्यात्; अर्थशब्दयोः समुच्चितयोस्तत्रव्यञ्जकत्वाभावात्। तथा च ध्वनिलक्षणे अव्याप्तिदोषः संपद्येत। तस्माद् ध्वनिलक्षणे वाशब्दो व्यर्थ एव।

ध्वनिलक्षणे महिमभट्टोद्भावितं सप्तमं दूषणम् —

7. व्यक्तिः

'यत्र वाच्यार्थः, आत्मानमप्रधानीकृत्य अर्थान्तरं व्यनक्ति स ध्वनिः' इति 'यत्र शब्दः आत्मनः अर्थमप्रधानीकृत्य अर्थान्तरं व्यनक्ति स ध्वनिः' इति एतदुभमयपि असंभवदोषजुष्टं वर्तते। 'प्रकाशकेन सहैव प्रकाश्यस्य प्रकटनं व्यक्तिः। अन्धकारेणाप्रकाशमानो घटः प्रकाशकेन प्रदीपेन सहैव प्रकाशत इति व्यक्तिरित्युच्यते। परं वस्त्वलंकाररसादिभेदेन त्रिविधेष्वन्यतमोऽपि प्रतीयमानार्थः प्रकाशकेन व्यञ्जकेन सहैव न प्रकाशते। व्यङ्ग्यव्यञ्जकयोः प्रतीतिः क्रमेण भवति। तथा च तयोः साहित्येन प्रकाशनात् तत्र व्यक्तिलक्षणं न संगच्छते। अतः लक्षणवाक्ये व्यक्तिपदं दुष्टम्।

ध्वनिलक्षणे महिमभट्टोद्भावितमष्टमं दूषणम् —

8. ध्वनिर्नाम

ध्वनिकारिकायां काव्यविशेषो ध्वनिरित्युच्यते। रससद्भावे काव्यत्वं ध्वनिकाराभिमतम्। 'काव्यस्यात्मा स एवार्थः' इत्यादिकारिकायामितहासदिशा रस एव काव्यस्यात्मा इति तेनैव प्रदर्शितम्। केवलरसात्मकत्वहेतुकस्य काव्यस्य ध्वनिरिति नूतनसंज्ञाकरणे प्रयोजनं नास्ति।

9. काव्यवैशिष्ट्यम्

ध्वनिलक्षणे 'काव्यविशेषो ध्वनिरिति' इत्यत्र विशेष इति पदं यदुक्तं तत्सर्वथा अनुपपद्यते। रसात्मनः काव्यस्य विशेषः न संभवति। निरतिशयसुखास्वादरूपो रसः, रसवदेव काव्यम्। रसात्मनि काव्ये अपूर्वतामाधातुं कोऽपि विशेषो नास्त्येव।

तस्मात् काव्यपदेनैव विशिष्टतासिद्धौ विशेषग्रहणं निरर्थकमेव।

ध्वनिलक्षणे महिमभट्टोद्भावितं दशमं दूषणम् —

**10. वचनं च कथनकर्तुः**

ध्वनिकारिकायां 'सूरिभिः कथितः' इत्यत्र कथनक्रियाकर्तृवाचकस्य सूरिभिरित्यस्य पदस्य निर्देशः अनपेक्षित एव। यदि सूरिभिरित्यनेन कथनक्रियायाः कर्तृमात्रं गृह्यते, तदा क्रियायाः कर्तारं विना अनुपपत्तेः कर्तृनिर्देशो नापेक्ष्यते। सूरिभिरित्यनेन कथनक्रियायाः कर्तृविशेषो विवक्षित इति चेत् कथनरूपव्यापारविशेषसंबन्धादेव क्रियायाः कर्तृविशेषस्य प्रतीतिः संपद्यते। तथा च कर्तृमात्रविवक्षायां कर्तृविशेषविवक्षायां च पक्षद्वयेऽपि अवाच्यवचने दोषः। अतः ध्वनिलक्षणे सूरिभिः इति पदं नोपादेयम्।

इत्थं ध्वनिलक्षणे दोषानुद्भाव्य ध्वनिलक्षणवाक्यस्य दोषरहितं तत्त्वमेवमाह महिमभट्टः -

''वाच्यस्तदनुमितो वा यत्रार्थोऽर्थान्तरं प्रकाशयति। सम्बन्धतः कुतश्चित् सा काव्यानुमितिरित्युक्ता'' इति।

# द्वित्वोत्पत्तिप्रक्रिया

**का. ई. गोविन्दन्**
प्रवाचकः

**उपोद्घातः -**

द्वित्वे च पाकजोत्पत्तौ विभागे च विभागजे।
यस्य न स्खलिता बुद्धिस्तं वै वैशेषिकं विदुः॥

इति वैशेषिकदर्शनस्य मुख्यप्रतिपाद्यरूपेण द्वित्वाद्युत्पत्तिविषयाः सन्ति इति सर्वदर्शनसंग्रहकारेणोक्तम्। कारिकाया अयमर्थः - द्वित्वसंख्याविषये, पाकजोत्पत्तिविषये, विभागजविभागविषये च यस्य बुद्धिः न च्यवते तं वैशिकशास्त्रमर्मज्ञं वदन्ति विद्वांसः।

निःश्रेयससाधकान् द्रव्यादीन् पदार्थान् विभज्य, द्रव्यादीनां स्वरूपं भेदं चोपवर्ण्य, गुणनिरूपणप्रसङ्गे 'एकत्वादिव्यवहारहेतुः संख्या सामान्यगुणः। एकत्वादिपरार्धपर्यन्ता। तत्रैकत्वं नित्यानित्यभेदेन द्विविधम्, नित्यगतं नित्यम्, अनित्यगतमनित्यम्, स्वाश्रयसमवायिकारणगतैकत्वजन्यं च। द्वित्वं तु अनित्यमेव। तच्च द्वयोः पिण्डयोः 'इदमेकम्' 'इदमेकम्' इत्यपेक्षाबुद्ध्या उत्पद्यते इत्युक्तम्।

अत्र मीमांसकाः इत्थं संगिरन्ते - यदा घटादिद्वयमेकत्र मिथः संनिहितं भवति तदानीमेव तत्र द्वित्वसंख्या उत्पद्यते। तदनु चक्षुरादीन्द्रियसंनिकर्षानन्तरम् 'अयमेकः' 'अयमेकः' इति अपेक्षाबुद्ध्या द्वित्वं ज्ञायते। तथा चापेक्षाबुद्धिः द्वित्वस्य व्यञ्जिका न तूत्पादिका। यदा तु घटादिद्वयं मिथो वियुक्तं भवति तदा द्वित्वस्य नाशः। एवमेव त्रित्वादिविषयेऽपि बोध्यम्।

वैशेषिकास्तु अज्ञाताया द्वित्वादिसंख्याया अभ्युपगमो व्यर्थ इति मन्वाना अपेक्षाबुद्धिरेव द्वित्वादेरुत्पादिकेति वदन्ति।

**द्वित्वाद्युत्पत्तिप्रकारः** - वैशेषकतन्त्रे इन्द्रियार्थसंनिकर्षमारभ्य संस्कारपर्यन्तानाम् अष्टसु क्षणेषु उत्पत्तिः द्वित्वादेर्भवति।

तथा हि - **प्रथमक्षणे** इन्द्रियार्थसंनिकर्षः। चक्षुरादेः इन्द्रियस्य घटद्वयेन सह संबन्धः इति यावत्। यत्र द्वित्वोत्पत्तिः भविष्यति तत्र सर्वप्रथमं द्वयोः द्रव्ययोः, तद्गतैकत्वसंख्ययोः, संख्यागतैकत्वत्वजात्योः द्वयोः, नयनादीन्द्रियस्य च संनिकर्षो भवति। तत्र द्रव्येण सह संयोगः, तद्गतैकत्वेन सह संयुक्तसमवायः, संख्यागतसामान्येन सह संयुक्तसमवेतसमवाय इति एतेषां त्रयाणां संनिकर्ष एकस्मिन्नेव क्षणे उत्पद्यते। अयमेव इन्द्रियार्थसंनिकर्षशब्दवाच्यः अंशः।

**द्वितीयक्षणे** एकत्वसामान्यज्ञानम्।

इन्द्रियार्थसंनिकर्षोत्पत्त्यनन्तरं (द्वितीयक्षणे) द्रव्यस्य, तद्गतैकत्वसंख्यायाः, एकत्वत्वजातेश्च इत्येतेषां त्रयाणां निर्विकल्पकज्ञानम् उत्पद्यते। अस्य ज्ञानस्य एकत्वसामान्यज्ञानपदेनोल्लेखः क्रियते।

---

श्रोत्रियं सुभगं गां च ह्यग्निमग्निचितं तथा।
प्रातरुत्थाय यः पश्येत् पापेभ्यः स प्रमुच्यते॥

**तृतीये क्षणे -** अपेक्षाबुद्धिः।

एकत्वसामान्यज्ञानात्परं तृतीयक्षणे द्रव्यगतैकत्वविषयकसविकल्पकज्ञानम् 'इदमेकं द्रव्यम्' 'इदमेकं द्रव्यम्' इत्याकारवं जायते। एकत्वं स्वाश्रयद्रव्ये द्वित्वोत्पत्त्यर्थमस्य ज्ञानस्यापेक्षां करोतीत्यस्यापेक्षाज्ञानम् अपेक्षाबुद्धिरित्युच्यते। इयं चापेक्षाबुद्धि स्वविशेष्यभूतद्रव्ये द्वित्वोप्तत्तेः निमित्तं भवति। एतत्क्षणे द्वित्वोत्पत्तेरपेक्षिताः सामग्र्यः संनिहिताः सन्ति। द्वित्वसमवायिकारणीभूतद्रव्यम्, असमवायिकारणीभूतद्रव्यगतैकत्वद्वयं पूर्वमेव संनिहितम्। इदानीं निमित्तकारणमपेक्षाज्ञानम्। अर्थात् द्रव्यद्वये वर्तमानमेकत्वद्वयज्ञानमप्युपस्थितम्। तथा च द्वित्वस्य समवायिकारणं द्रव्यद्वयम्, असमवायिकारणमेकत्वद्वयम्, निमित्तकारणमपेक्षाज्ञानं द्रव्यद्वयगतैकत्वद्वयज्ञानमिति एतात्त्रितयसंनिधानेन द्वित्वोत्पत्त्यपेक्षितसामग्रीक्लृप्तिः भवति।

**चतुर्थे क्षणे द्वित्वोत्पत्तिः**

अपेक्षाबुद्ध्युत्पत्त्यनन्तरं चतुर्थेक्षणे द्वित्वोत्पत्तिः, द्वितीयक्षणोत्पन्नस्य एकत्वसामान्यज्ञानस्य नाशः, द्वित्वद्वित्वत्वयोर्निर्विकल्पकज्ञानकारणीभूतस्य अर्थात् द्वित्व-द्वित्वत्वाभ्यां सहेन्द्रियार्थसंनिकर्षरूपसामग्री इत्येतत्त्रितयमस्मिन् क्षणे घटितं भवति।

**पञ्चमे क्षणे -** द्वित्वत्वसामान्यज्ञानम्।

द्वित्वोत्पत्त्यनन्तरं पञ्चमक्षणे द्वित्वद्वित्वत्वयोर्निर्विकल्पकज्ञानम्, तृतीयक्षणोत्पन्नापेक्षाज्ञान-विनाशसामग्रीसमवधानं, द्वित्वसविकल्पकसामग्र्युपस्थितिः इत्येतत्त्रितयमस्मिन् क्षणे घटितं भवति।

**षष्ठक्षणे -** द्वित्वगुणज्ञानम्।

द्वित्वत्वसामान्यज्ञानानन्तरं षष्ठे क्षणे द्वित्वसविकल्पकज्ञानोत्पत्तिः, तृतीयक्षणोत्पन्नापेक्षाबुद्धिनाशः, 'इमे द्वे' इति द्रव्ये द्वित्वज्ञानोत्पादकसामग्रीसमवधानमित्येतत्त्रितयं युगपदुत्पद्यते।

**सप्तमे क्षणे -** द्वे द्रव्ये इति धीः (अर्थात् इमौ द्वौ घटौ इत्यादिद्वित्वसंख्याविशिष्टज्ञानम्)।

द्वित्वगुणज्ञानानन्तरं सप्तमे क्षणे 'इमे द्वे' इति द्रव्ये द्वित्वज्ञानोत्पत्तिः, द्वित्वस्य नाशः, द्वित्वसविकल्पकज्ञानसामग्री-संनिधानमित्येतत्त्रितय घटितं भवति।

**अष्टमे क्षणे -** संस्कारः अर्थात् ''इमे द्वे द्रव्ये'' इति आत्मनि ज्ञानजन्यसंस्कारो जायते।

द्वे द्रव्ये इति ज्ञानोत्पत्त्यनन्तरमष्टमे क्षणे तादृशज्ञानजन्यः संस्कारः, द्वित्वसविकल्पकज्ञानस्य नाशः, ''इमे द्वे'' इत्याकारकज्ञानस्य विनाशकसामग्र्यः समवधानमित्येतत् त्रितयं भवति।

**नवमे क्षणे** - उक्तसंस्कारात् ''इमे द्वे'' इत्याकारकज्ञानस्य नाशः। एवं द्वित्वस्योत्पत्तिः, तन्नाशः, द्रव्ये द्वित्वस्य प्रत्यक्षता तन्नाशः इत्येतच्चतुष्टयं नवसु क्षणेषु संपन्नं भवति। तदाह-

[1]आदाविन्द्रियसंनिकर्षघटनात् [2]एकत्वसामान्यधीः
[3]एकस्योभयगोचरा मतिरतो [4]द्वित्वं ततो जायते।
[5]द्वित्वत्वप्रमितिस्ततो नु परतो [6]द्वित्वप्रमानन्तरं
[7]द्वे द्रव्ये इति धीरियं निगदिता द्वित्वोदयप्रक्रिया॥ इति।(सर्वदर्शनसंग्रहः)

**द्वित्वोत्पतौ अपेक्षाबुद्धिः कारणमित्यत्र प्रमाणम् -**

अपेक्षाबुद्धितः द्वित्वं जायत इत्यत्र किं प्रमाणमिति चेत् उच्यते - यथा व्यङ्ग्योऽर्थः व्यञ्जकमपेक्षते तथोत्पाद्योऽर्थः उत्पादकमपेक्षते। प्रकृते द्वित्वादिसंख्यया अपेक्षाबुद्धिरपेक्ष्यते। अपेक्षाबुद्धेश्च न द्वित्वादिव्यञ्जकत्वम्। यतः अपेक्षाबुद्धेः पूर्वं द्वित्वादिसत्त्वे प्रमाणभावात्। प्रमेयसिद्धेः प्रमाणाधीनत्वात्। तथा च यत्र व्यञ्जकत्वाभावसहकृतमपेक्ष्यमाणत्वं तत्रोत्पादकत्वम्। यथा शब्देनापेक्ष्यमाणे कण्ठताल्वादिप्रदेशेषु पवनसंयोगे शब्दोत्पादकत्वमिति व्याप्त्या अपेक्षाबुद्धेर्द्वित्वाद्युपादकत्वं सिध्यति। तथा च एकत्वद्वयविषया अयमेको अयमेक इत्याकारिका अनित्या च या अपेक्षाबुद्धिः तद्व्यङ्ग्यं द्वित्वादिकं न भवति। द्वित्वस्य अनेकाश्रितगुणत्वात्। द्वित्वसंख्या हि द्वयोः पर्यासा। एवं त्रित्वसंख्या त्रिषु इत्यादि।

एतदुक्तं भवति - एकत्वद्वयविषयिणी अपेक्षाबुद्धिः अयमेकः अयमेकः इत्याकारिका अनित्या। यतः द्वित्वमनेकपदार्थाश्रितम्। अपेक्षाबुद्धिद्वारा द्वित्वस्य अभिव्यक्त्यर्थं वस्तुनः एकाश्रितत्वमनिवार्यम्। द्वित्वसंख्या तु पदार्थद्वयमभिव्याप्यास्ति, त्रित्वसंख्या पदार्थत्रयं व्याप्य तिष्ठति पृथक्त्वादिवत् इति। यथा चैत्रमैत्रौ देवदत्तात् पृथग्भूतौ इत्यत्रानेकवृत्तिपृथक्त्वं 'देवदत्तात् चैत्रः पृथक्', 'देवदत्तात् मैत्रः पृथक्' इत्याकारकेणानेकपृथक्त्वविषयकापेक्षाबुद्धिव्यङ्ग्यं न भवति तद्वदत्रापि। तथा च व्यङ्ग्यत्वासिद्ध्या जन्यत्वमेव सिध्यतीति भावः।

**आश्रयनाशात् द्वित्वस्य नाशः -**

एतावता द्वित्वस्य नाशः अपेक्षाबुद्धिनाशात् भवति इत्युक्तम्। कदाचित् आश्रयनाशादपि द्वित्वनाशो भवति। तथाहि- प्रथमक्षणे एकत्वसामान्यज्ञानम्, एकत्वाश्रयभूतघटावयवकपाले क्रिया इत्येतद्द्वमुत्पद्यते। द्वितीये क्षणे अपेक्षाबुद्धिः, घटावयवस्यावयवान्तरात् विभागः इत्येतद्द्वयं जायते। तृतीयक्षणे द्वित्वं घटोत्पादकावयवसंयोगनाश इत्येतद्द्वयं जायते। चतुर्थक्षणे द्वित्वसामान्यज्ञानं घटात्मकाश्रयनाश इत्येतद् द्वयमुत्पद्यते। पञ्चमे क्षणे अपेक्षाबुद्धेर्नाशिः, द्वित्वस्य नाश इत्येतद्द्वयस्य जन्म।

अस्यां प्रक्रियायां पञ्चमे क्षणे अपेक्षाबुद्धिनाश-द्वित्वनाशयोः युगपदुत्पन्नत्वात् अपेक्षाबुद्धिनाशकार्यं द्वित्वनाश इति वक्तुं न शक्यते। अतः यो द्वित्वनाशो भवति सः तदाश्रयभूतघटनाशकार्य इत्येव स्वीकार्यम्।

**अपेक्षाबुद्धि-आश्रयनाशाभ्यामपि द्वित्वनाशः -**

न केवलमपेक्षाबुद्धिनाशात् द्वित्वनाशः, न केवलमाश्रयनाशात् द्वित्वनाशः अपि तु उक्तनाशद्वयादपि द्वित्वनाशः कदाचित् भवति। तथा हि - अपेक्षाज्ञानजन्मसमये एकत्वाश्रयघटावयवकपाले क्रियोत्पत्त्यनन्तरं द्वितीयक्षणे द्वित्वस्य, घटावयवयोः परस्परं विभाग इत्येतदुभयं युगपत् भवति। तृतीयक्षणे द्वित्वसामान्यज्ञानम्, द्वित्वगुणप्रत्यक्षम्, घटारम्भकावयवसंयोगस्य नाशः इत्येतेषां त्रयाणामुत्पत्तिर्युगपत् भवति। तदनन्तरं चतुर्थक्षणे अपेक्षाबुद्धेः नाशः, घटस्य नाशः, 'इमे द्वे' इत्याकारकं द्वित्वस्य प्रत्यक्षात्मकं ज्ञानमित्येतेषां त्रयाणामेककाले उत्पत्तिः। क्षणेऽस्मिन् द्वित्वोत्पादकापेक्षाबुद्धिनाशः द्वित्वाश्रयघटस्य नाशः इत्येतद्द्वयमेककाले संनिहितं भवति। किं तु अनयोर्मध्ये किं द्वित्वस्य नाशकम्, किं न इति वक्तुमेकतरपक्षपातिनी युक्तिः नास्ति। अतः गत्यन्तराभावात् द्वावपि द्वित्वस्य नाशकावित्यभ्युपेतव्यम्।

# षष्ठ्यर्थविचारः

डा. श्रीपाद सत्यनारायणमूर्तिः
प्रवाचकः

'षष्ठी शेषे' (2-3-50) इति षष्ठीविधायकं पाणिनीयं सूत्रम्। 'शिष्लृ विशेषणे' इति रौधादिकधातोः घञि निष्पन्नस्य शेषशब्दस्याप्रधानार्थकतया अप्रधाने षष्ठीति सूत्रार्थः स्यात्। तथा सति शुक्लः पट इत्यादौ प्रातिपदिकार्थमात्रे विशेषणे षष्ठीप्रसङ्गः। प्रथमया बाध इति तु वक्तुं न शक्यते तस्याः प्रधाने चरितार्थत्वात्। किञ्चास्मिन् पक्षे सर्वेषां कारकाणां क्रियार्थत्वात् शेषत्वमिति तत्रापि षष्ठीप्रसङ्गः। यद्यप्येतस्य कर्मत्वाद्यविवक्षायां चारितार्थ्येन क्रियाकारकभावेनान्वये तत्तद्विधिभिः बाधात् षष्ठ्यापत्तिरेव नास्ति। अभिहितविषयेऽपि प्रथमया बाधात्। तथापि 'ज्ञोऽविदर्थस्य करणे' (2-3-51) इत्यादिषु "शेषे" इत्यनुवृत्तेः तद्विषये क्रियाकारभावेनान्वयेऽपि परत्वात् षष्ठी प्रसज्येत। एतेन 'गुणे षष्ठी' ति व्याकरणान्तरवचनमपि निरस्तं भवति। अतोऽत्राप्रधानार्थकशेषशब्दस्य न ग्रहणम्। किन्तु 'शिष असर्वोपयोगे' इति चौरादिकधातोः घञ्प्रत्ययेन निष्पन्नस्य शेषशब्दस्य ।उपर्युक्तादन्यश्शेषः।

यथा 'राज्ञः पुरुष' इत्यादौ कर्तृत्वादिकारकशक्तिभ्योऽन्यः, प्रातिपदिकार्थभिन्नः स्वस्वामिभावादिरूपस्संबन्ध एव शेषपदार्थः। स च क्वचित् स्वत्वस्वामित्वादिविशेषरूपेण, क्वचित् संबन्धसामान्यरूपेण च भवति। स्वत्वत्वादिना विशेषरूपेण संबन्धवाचकत्वस्वीकारादेव चैत्रेण रक्षिते मैत्रीयवासादौ नायं चैत्रस्य वास इति प्रयोग उपपद्यते। अन्यथा चैत्रसंबन्धस्यापि तत्र सत्त्वेन निषेधानुपपत्तिः। विशेषरूपेण भाने तु चैत्रीयस्य पाल्यपालकभावसंबन्धस्य सत्त्वेऽपि स्वत्वस्याभावान्निषेधोपपत्तिः। सामान्यरूपेणापि वाच्यत्वाङ्गीकारादेव "देवदत्तस्य पुत्रपाणिकम्बलानि" इत्यादौ सामान्यरूपेण तत्तत्संबन्धविशेषाणां भानमुपपद्यते।

कारकविभक्तीनां क्रियाजनकत्वसमानाधिकरणकर्तृत्वादिशक्तिरूपेण बोधकत्वम्। तत्रापि क्रियाकारकभावमूलके संबन्धे विवक्षिते षष्ठी भवति। सर्वत्र क्रियाकारकसंबन्धो वस्तुस्थित्यास्ति। तन्निमित्तं च स्वस्वामिभावादिसंबन्धविवक्षायां सन्नपि क्रियाकारकसंबन्धो न विवक्ष्यते। तत्र क्वचित्-श्रुतायां क्रियायाम्। क्वचिदश्रुतायां क्रियायाम्। यथा मातुः स्मरतीत्यादौ श्रूयमाणक्रियाकर्मत्वादिकं विद्यमानमप्यविक्षितत्वात् विशेषणभाव एव स्मरणं प्रति मातुः प्रतिपाद्यते। मातृसंबन्धिस्मरणमिति। एवं राज्ञः पुरुष इत्यत्र क्रियाया अश्रवणेऽपि सिद्धस्वभावानां द्रव्याणां क्रियां विना परस्परसंबन्धासम्भवात् संबन्धलक्षणकार्यानुपपत्त्या अनुमीयमानस्वत्त्वादिहेतुभूतदानक्रियाकर्तृत्वसंप्रदानत्वमूलकस्वस्वामिभावे विवक्षिते षष्ठी। तथा वृक्षस्य शाखेत्यादौ आधाराधेयभावमूलकावयवावयविभावरूपे संबन्धे विवक्षिते षष्ठी। अत एव —

"संबन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः।
श्रुतायामश्रुतायां वा क्रियायां सोऽभिधीयते॥" इति

सर्वत्र संबन्धस्य क्रियाकारकपूर्वकत्वं हरिणाप्युक्तम्। एवं च क्रियाकारकसंबन्धः कारणं, शेषसंबन्धस्तु तत्फलं भवतीति ज्ञायते।

---

सत्यान्नास्ति परो धर्मः सत्यान्नास्ति परं तपः।
सत्यान्नास्ति परो योगः सत्यान्नास्ति परं पदम्॥

# आत्मनि प्रमातृत्वादिः न परमार्थः

डा. पा. सीताराम हेब्बारः
प्रवाचकः

आत्मनि प्रमातृ-प्रमाण-प्रमेयादिव्यवहाराः न परमार्थसत्याः, किन्तु औपाधिकाः भवन्ति। तथा हि - सर्वसाक्षिरूपोऽयमात्मा अप्रमेयः इत्यभ्युपगमात् असौ आत्मा प्रमाणादिव्यवहारैः ज्ञातुं न शक्यते। प्रमेयभूताः सर्वे इन्द्रियादीनां दर्शनयोग्याः भवन्ति। रूप-रस-गन्ध-स्पर्शशब्दादयः धर्माः इन्द्रियवेद्याः। आत्मनि धर्मस्य वासना अपि नास्ति। तथा च श्रुतिः-

अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्।
अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते॥

(क. उ. १-३-१५) इति। आत्मा प्रत्यक्षानुमानागोचरः। अतः अप्रमेयः। अयं विषयः ब्रह्मसूत्रभाष्ये अनूद्य भाष्यकारैः श्रीशङ्कराचार्यैः स्वमतमेवमुपस्थाप्यते -

यदुक्तं परिनिष्पन्नत्वात् ब्रह्मणि प्रमाणान्तराणि सम्भवेयुरिति। तदपि मनोरथमात्रम्। रूपाद्यभावाद्धि नायमर्थः प्रत्यक्षस्य गोचरः। लिंगाद्यभावाच्च नानुमानादीनाम्। आगममात्रसमधिगम्य एव त्वयमर्थो धर्मवत्। (ब्र. सू. शा. भा. २-१-६) इति। तथा च श्रुतिः -

नैषा तर्केण मतिरपनेया प्रोक्ता अन्येनैव सुज्ञानाय प्रेष्ठ। (क. उ. १-२-९) इति।

अतः आगमः एक एव आत्मज्ञाने अस्मानुपकरोति, यथा अतीन्द्रियाः धर्माधर्मादिरूपात्मधर्माः शास्त्रेणैकेनेव ज्ञायन्ते तद्वत्।

प्रमाणं यत्र प्रमेयज्ञानमुत्पादयति तस्य ज्ञानस्य साक्षात् यः कर्ता सः प्रमाता इत्युच्यते। ज्ञानसाधनभूतानि इन्द्रियाणि प्रमाणानि। ज्ञानस्य विषयः प्रमेयः इति विवेकः। व्यवहारकाले एते विभागाः त्रयः अत्यावश्यकाः भवन्ति, आत्मज्ञानस्य उपकारकाश्च। प्रमेयभिन्नमात्मतत्त्वमेकमेव इति मन्तव्यम्। तथा च श्रुतिः -

एकधैवानुद्रष्टव्यमेतदमेयं ध्रुवम्। (बृ. उ. ४-४-२०) इति।

ननु यद्यपि आत्मज्ञानसाक्षात्कारार्थम् इन्द्रियाणामावश्यकत्वं नास्ति, तथापि मनसः आवश्यकत्वमतीव वर्तते। मनसा एव हि तत् ज्ञातुं शक्यते। अतः मनः आवश्यकमेव इति चेत् - सत्यम्। मनसा एव आत्मज्ञानसाक्षात्कारो भवति। एवं वदति बृहदारण्यकश्रुतिः -

मनसैवानुद्रष्टव्यः नेह नानास्ति किंचन।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति॥

बृ. उ. ४-४-१९) इति। गीताभाष्येऽपि आचार्याः श्रीशङ्कराः- शास्त्राचार्योपदेशशमदमादिसंस्कृतं मनः आत्मदर्शने करणम् (भग. शा. भा. २-२१) इत्थमभ्यदधुः। आत्मज्ञाने मनः कारणं न भवति, अपितु निमित्तमात्रम्। कारणव्यपदेशस्तु प्रामुख्यमात्रेणैव

---

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः।
ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रञ्जयति॥

इति। गौडपादाचार्याः स्वकारिकायामेवमुपदिशन्ति -

आत्मसत्यानुबोधेन न संकल्पयते यदा।
अमनस्तां तदा याति ग्राह्याभावे तदग्रहम्॥

ननु प्रमातृ-प्रमाण-प्रमेयव्यवहाराणां सर्वेषामपि प्रत्यक्षत्वात् कथमेते असत्याः इत्युच्यन्ते इति चेत्, एते व्यवहारा दृश्यत्वमात्रेणैव सत्याः न भवन्ति। यतः शुक्तौ रजतं दृश्यते, केवलं दृश्यत्वेन रजतं सत्यमिति नाभ्युपगम्यते। एवम् एकश्चन्द्र सद्वितीयः इत्यत्र एक एव चन्द्रः दृष्टिदोषेण सद्वितीयवद् भाति। अमुं व्यवहारं सर्वे सत्यमिति नाङ्गीकुर्वन्ति। एवं दृश्यमानं सर्वं सत्यमित्यङ्गीकर्तव्यमिति न नियमः। यथा अध्यासेन शुक्तौ रजतमिति प्रतीतिः तथा आत्मनि कर्तृत्वादिप्रमाण-प्रमेयव्यवहाराः अध्यासात् भवन्ति। आत्मनि अनात्माध्यासः आविद्यकः इत्युच्यते। भाष्येऽपि आचार्यैः एवमाम्नातम् -

तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाण-प्रमेयव्यवहाराः लौकिकाः वैदिकाश्च प्रवृत्ताः। (ब्र. सू. शा. अध्यासमाष्यम्) इति। अपि च तत्रैव भाष्ये -

देहेन्द्रियादिषु अहं ममाभिमानरहितस्य प्रमातृत्वानपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेः (अध्यासभाष्यम्) इत्युक्तम्।

मम देहः, मदीयानि इन्द्रियाणि इति अनात्मनि आत्मत्वव्यवहारे एव अहं प्रमाता, प्रमाणभूतैः इन्द्रियैः प्रमेयं जानामि इत्यादि प्रमातृ-प्रमाण-प्रमेयव्यवहाराः उपपद्यन्ते। एते व्यवहाराः आविद्यकाः। तस्मात् आत्मनि प्रमातृ-प्रमाण-प्रमेयरूपो विभागः नोपपद्यते, अपारमार्थिकाश्च इति अवश्यं मन्तव्यं भवति।

# मीमांसानयेन सङ्करालङ्कारनिर्णयः

डा. सन्निधानं सुदर्शनशर्मा
प्रवाचकः

उपमारूपकादिरलङ्कारवर्गः रसानुगुण्येन निवेशनमर्हति। विशिष्य शृङ्गारे ध्वन्यात्मभूते सति कविरत्यन्तमवहितस्सन् शब्दालङ्काराणामर्थालङ्काराणां वा बाहुल्यं यथा न स्यात्तथा समीक्ष्य निबध्नीयात्। अन्तरङ्गाणामपि वाच्यालङ्काराणां बाहुल्यं काव्यात्मनो रसस्यापकर्षकमेव भवेत्। समीक्ष्य विनिवेशित एवालङ्कारः अन्वर्थो भवति। अलङ्क्रियते अनेनेत्यलङ्कारः इति खलु व्युत्पत्तिः ! यथेच्छं वर्णितः अलङ्कारः अलङ्कार्यस्यापकर्षकस्स्यात्। सा च समीक्षा कथं करणीया इति चेदुच्यते :-

विवक्षा तत्परत्वेन नाङ्गित्वेन कदाचन।
काले च ग्रहणत्यागौ नातिनिर्वहणैषिता ॥
निर्व्यूढावपि चाङ्गत्वे यत्नेन प्रत्यवेक्षणम्।
रूपकादेरलङ्कारवर्गस्याङ्गत्वसाधनम् ॥[1]

तत्परत्वेन रसाङ्गत्वेन विवक्षा कार्या। अङ्गित्वेन अलङ्कार्यत्वेन कदाऽपि विवक्षितो न भवेदलङ्कारः। काले ग्रहणं = उचिते कालेऽलङ्कारो ग्राह्यः। काले त्यागः = उचिते अवसरेऽलङ्कारस्त्याज्यः। अलङ्कारस्यातिनिर्वहणेच्छा कवेर्न स्यात्। यत्नेन पर्यालोच्य अलङ्काराणामङ्गताऽऽपादनीया। रसबन्धेष्वत्यादृतमनाः कविः इत्थं समीक्षां कृत्वा अलङ्कारान् निवेशयेदित्युक्त्वाऽऽनन्दवर्धनः "काले त्यागः" इत्यंशस्य कृते -

रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणैः
त्वामायान्ति शिलीमुखास्स्मर धनुर्मुक्तास्तथा मामपि।
कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः
सर्वं तुल्यमशोक ! केवलमहं धात्रा सशोकः कृतः ॥

इति श्लोकमुदाजहार। अत्र प्रबन्धप्रवृत्तः श्लेषः व्यतिरेकविवक्षया त्यज्यमानस्सन्, काव्यात्मभूतस्य विप्रलम्भशृङ्गारस्याङ्गभूतस्सन्, अन्वर्थो भवतीत्यादि तेन प्रत्यपादि।

नन्वयं श्लोकः "काले त्याग" इत्यंशस्य तदैवोदाहरणं भवेद्यदाऽत्र पृथक् द्वौ अलङ्कारौ स्तः। तदेव न सम्भवति। अत्र पद्ये आद्येषु त्रिषु पादेषु श्लेषः, चतुर्थे च व्यतिरेकः इति यद्भवतोक्तं तत्तुच्छम्। नेमौ द्वौ (पृथक्) अलङ्कारौ भवतः; किन्तु एक एव श्लेषव्यतिरेकयोस्साङ्कर्यरूपः अलङ्कारः। नरांश-सिंहांशयोर्द्वयोस्सतोरपि यथा "नरसिंहः" एक एव तद्वदत्रापि। एवञ्च साङ्कर्यादलङ्कारैक्ये अयं श्लोकः "काले त्याग" इत्यस्योदहरणं न भवेदिति पूर्वः पक्षः।

सिद्धान्तानुसन्धानात्प्राक् सङ्करालङ्कारस्वरूपं संक्षेपेण परामिमृक्षकः अस्मि।

निष्कृष्टरूपेण सङ्करालङ्कारस्य निरूपणं मम्मटाचार्येणाकारि[2]। तमन्वसरन् रुय्यक[3] - विद्यानाथ[4] विद्याधर[5] - विश्वनाथा[6]दयः। परस्परापेक्षया यत्र अलङ्कारौ (राः) नीरक्षीरवत् सम्मिश्रितौ (ताः) तत्र सङ्करः इति सामान्यतोऽस्यालङ्कारस्य स्वरूपमवगन्तव्यम्। सङ्करः संसृष्टिरिति पृथग्भूतौ स्वतन्त्रौ द्वौ अलङ्कारौ न भवत इति प्राचां मतम्। तेषामग्रणीः दण्डी अलङ्कारममुं

यत्र नास्ति गतिर्वायोः रश्मीनां च विवस्वतः।
तत्रापि प्रविशत्याशु बुद्धिर्बुद्धिमतां नृणाम्॥

यद्यपि न्यरूपयत्तथाऽपि सङ्कीर्णनाम्नाऽऽजुहाव।

"अङ्गाङ्गिभावावस्थानं सर्वेषां समकक्ष्यता।
इत्यलङ्कारसंसृष्टेर्लक्षणीया द्वयी गतिः ॥[7]

इत्यत्र प्रथमप्रकार एवार्वाचीनैः सङ्करालङ्कार इति व्यवह्रियते; द्वितीयस्तु संसृष्टिरिति। रुद्रटोऽपि दण्डिन एव पन्थानमनुसरन्नाह -

"योगवशादेतेषां तिलतण्डुलवच्च दुग्धजलवच्च।
व्यक्ताव्यक्तांशत्वात्सङ्कर उत्पद्यते द्वेधा[8] ॥" इति।

अस्य मते सङ्करो द्विविधः। तिलतण्डुलवद्व्यक्तांशः, दुग्धजलवदव्यक्तांशश्चेति। तिलतण्डुलवाद्विद्यमानः संसृष्ट्यलङ्कारः। नीरक्षीरवद्विद्यमानः सङ्करः। उद्भटोऽपि सङ्करं निरूपयन् तं चतुर्धा व्यभजत्[9]। यत्र वाक्ये शब्दालङ्कारः अर्थालङ्कारश्च सहभाविनौ तत्र संसृष्ट्यलङ्कार इति केषाञ्चनार्वाचीनानां मतम्। हेमचन्द्र[10]स्तु अलङ्काराणामेकत्र स्वातन्त्र्येण स्थितावपि सङ्करं मनुते। किन्तु मम्मटादीनामर्वाचीनानां मतानुसारं सोऽयं संसृष्ट्यलङ्कारः। तथा च संशयः, एकाश्रयानुप्रवेशः, अङ्गाङ्गिभाव इति त्रयः सङ्करभेदास्तु प्रायेण सर्वेषां सम्मताः।

इदमायाति गगने भिन्दानं सन्ततं तमः।
अमन्दनयनानन्दकरं मण्डलमैन्दवम् ॥

अत्र पद्येऽतिशयोक्त्यलङ्कारो भवेद्यदि मुखे चन्द्रत्वमध्यवसीयते। मुखे चन्द्रत्वारोपे तु रूपकालङ्कारः। प्रकृतत्वे तुल्ययोगितालङ्कारः। मुखस्य प्रकृतत्वे चन्द्रस्याप्रकृतत्वे दीपकालङ्कारः। इत्थं को वाऽलङ्कारोऽत्र ग्राह्य इति सन्देहात् सन्देहसङ्करालङ्कारः।

कटाक्षेणापीषत्क्षणमपि निरीक्षेत यदि सा
तदानन्दस्सान्द्रः स्फुरति पिहिताशेषविषयः।
सरोमाञ्चोदञ्चत्कुचकलशनिर्भिन्नवसनः
परीरम्भारम्भः क इव भविताम्भोरुहदृशः ॥

अत्र 'क्ष' 'अञ्च' 'म्भ' प्रभृतीनामावृत्त्या छेकालङ्कारः। तथैव अर्थापत्त्यलङ्कारोप्यत्र वरीवर्ति। तौ द्वौ एकस्मिन्नाश्रयेऽनुप्रविष्टाविति एकाश्रयानुप्रवेशसङ्करः।

आकृष्टिवेगविगलद्भुजगेन्द्रभोग
निर्मोकपट्टपरिवेष्टनयाऽम्बुराशेः।
मन्दव्यथाव्युपशमार्थमिवाशु यस्य
मन्दाकिनी चिरमवेक्षत पादमूले ॥

अत्रोत्प्रेक्षानुप्राणितनायिकानायकव्यवहारस्य वाक्यार्थत्वात् समासोक्त्यलङ्कारः अङ्गी। तदङ्गत्वं - अपह्नुतिः, श्लेषः, अतिशयोक्तिः - इत्येतेषाम्। अतः अत्र पद्ये अङ्गाङ्गिभावसङ्करालङ्कारः।

"रक्तस्त्वम्" इति पद्ये सङ्करालङ्कार इति पूर्वपक्षस्योत्तरं दत्तं ध्वनिकृता - "न। तस्य प्रकारान्तरेण व्यवस्थापनात् यत्र हि श्लेषविषय एव शब्दे प्रकारान्तरेण प्रतीतिर्जायते स तस्य विषयः" इति। सङ्करालङ्कारस्य विषयोऽन्यः। यत्र यैश्शब्दै श्लेषोऽभिहितः, तैरेव शब्दैः यदि व्यतिरेकोऽपि बोधितः, तत्रैव साङ्कर्यमित्यस्य वाक्यस्याशयः।

अत्रैव मीमांसान्यायस्य प्रवेशः उपपद्यते। तथाहि - यैश्शब्दैः श्लेष अभिहितः, तैरेव व्यतिरेकोऽपीत्युक्तिः समानाभिधान श्रुतिं[11] समानपदश्रुतिं वा स्मारयति। यथा- "स हरिर्नाम्ना देवः, सहरिर्वरतुरगनिवहेन"। अयमेव एकाश्रयसङ्करः। तथा च यत्र समानपदश्रुत्या श्लेषव्यतिरेकयोरुक्तिः तत्रैव साङ्कर्यमिति वक्तव्यम्। "रक्तस्त्व"मित्यत्र तु श्लेषप्रतपादकाः, व्यतिरेक प्रतिपादकाश्च शब्दाः परस्परं भिन्नाः। अत्र समानपदश्रुतेरभावात् न साङ्कर्यम्।

ननु श्लेषमुखेनैव व्यतिरेकस्यात्मलाभः; व्यतिरेकस्तदैव आत्मप्रतिष्ठां लभते यदा श्लेषः साम्यप्रतिपादनमुखेन भूमिकामारचयति। विना श्लेषेण व्यतिरेको नास्त्येव। अतः द्वयोर्मध्ये उपकार्योपकारकभाव अस्तीति साङ्कर्यमेव इति चेत्,

न। श्लेषादिद्वारा साम्यप्रतिपादनेन विनाऽपि व्यतिरेकस्य दर्शनात्। यथा -

नो कल्पापायवायोरदयरयदलत्क्ष्माधरस्यापि शम्या
गाढोद्गीर्णोज्ज्वलश्रीरहनि न रहिता नो तमः कज्जलेन।
प्राप्तोत्पत्तिः पतङ्गान्न पुनरुपगता मोषमुष्णत्विषो वो
वर्तिस्सैवान्यरूपा सुखयतु निखिलद्वीपदीपस्य दीप्तिः॥

इत्यत्र। अतः "रक्तस्त्वम्" इति पद्ये संसृष्टिरेव, न संकरः इति ध्वन्यालोककारसिद्धान्तः।

आनन्दवर्धनस्यायं सिद्धान्तः द्वादशलक्षणीगतश्रुत्यादिषट्प्रमाणान्यतमेन प्रकरणेनापि समुपष्टम्भयितुं शक्यते तथ हि - "उभयाकाङ्क्षा प्रकरणम्[12]"। "समिधो यजति" "तनूनपातं यजति" इत्यादिना प्रतिपादितानां प्रयाजानां फलविशेषस्या-निर्देशात् मम उपकार्यं किम्? इत्याकांक्षा अस्ति। तथैव दर्शपूर्णमासाभ्यां स्वर्गं भावयेदिति बोधानन्तरं दर्शपूर्णमास प्रधानस्यापि, कथमित्युपकारकाकाङ्क्षा वर्तते। अतः प्रकरणात् प्रयाजानां दर्शपूर्णमासाङ्गत्वम्[13]। तद्वत् श्लेषस्य मम उपकार्यं (अङ्गी) किम्? इत्याकाङ्क्षा, व्यतिरेकस्य च कः ममोपकारकः? (अङ्गम्) इत्याकाङ्क्षा यद्यभविष्यत् तदा अङ्गाङ्गिभावस्समभविष्यत्। उभयाकाङ्क्षाया अभावेऽपि अन्यतराकाङ्क्षया - क्लृप्तोपकारकाणामिव[14] - अङ्गाङ्गि भावोऽस्तु श्लेषव्यतिरेकयोरित्यपि नाशङ्कनीयम्। नचाप्याशङ्कनीयम् - "अरुणया पिङ्गाक्ष्या एकहायन्या गवा सोमं क्रीणाती" त्यत्र गोरूपद्रव्यपरिच्छेदद्वारा यथाऽऽरुण्यादीनां क्रयाङ्गत्वमुक्तं तथा साम्यप्रतिपादनद्वाराऽस्तु श्लेषस्य व्यतिरेकाङ्गत्वमिति। अन्यतरस्यापि अन्यतराकाङ्क्षाया अभावात्। नाप्यत्रावान्तरप्रकरणं प्रयोजकम्; सन्दंशाभावात्। अतः "रक्तस्त्व"मिति श्लोके संसृष्टिरेव। न साङ्कर्यम्।

तदित्थ मीमांसानयेनापि अलङ्कारसाङ्कर्यनिर्णयः सुशक इति शम्।

---

1. ध्वन्यालोकः II -19,20
2. काव्यप्रकाशः - X 161
3. अलङ्कारसर्वस्वम् पृ. 284
4. प्रतापरुद्रयशो भूषणम्। मिश्रालङ्कारप्रकरणम् -5
5. एकावली VIII - 74
6. साहित्यदर्पणः X- 144
7. काव्यादर्शः II.- 360
8. काव्यालङ्कारः X - 25
9. काव्यालङ्कारसारसङ्ग्रहः V - 13
10. काव्यानुशासनम् VI - 31
11. तत्र साध्याकाङ्क्षायां वक्ष्यमाणांशत्रयोपेताऽऽर्थीभावना साध्यत्वेन सम्बध्यते, एक प्रत्ययगम्यत्वेन समानाभिधानश्रुतेः। मीमांसा सान्यायप्रकाशः पृ. 4.
12. मीमांसान्यायप्रकाशः पृ. 48
13. "प्रयाजादेः फलेऽपेक्षा कथम्भावेऽपि च क्रतोः।
तेन प्रकारणाम्नानं तस्मादङ्गाङ्गिता तयोः॥" जैमिनि न्यायमाला पृ. 153.
14. क्लृप्तोपकारकाणि प्राकृताङ्गानि; कल्प्योपकारकाणि वैकृताङ्गानि। मीमांसान्यायप्रकाशः पृ. 55

---

शीलभारवती कान्ता पुष्पभारवती लता।
अर्थभारवती वाणी भजते कामपि श्रियम्॥

# वेदेषु सौर्यविज्ञानम्

डा. रा. ल. नरसिंहशास्त्री
प्रवाचकः

अस्मिन् प्रपञ्चे मानवस्यानन्दकारकेषु पदार्थेषु अर्णवोऽन्तरिक्षं च प्रथमं स्थानं भजेते। समुद्रस्य दर्शनेन कस्य वा मनः नोत्तेजितं भवति ? आबालवृद्धं सर्वे सायं सागरतीरमासाद्योत्तुङ्गतरङ्गाणामुत्थानपतनानि दृष्ट्वा नितरां सन्तुष्टास्सन्तः भगवतः सृष्टिवैचित्रीं सहस्रशःस्तुवन्ति। एवमेव रात्रिसमये प्रकाशमानानां ग्रहनक्षत्रादीनां दर्शनेनापि मानवस्य मस्तिष्के बहवः प्रश्नाः समुद्भवन्ति। चन्द्रमसः स्वरूपं किम् ? सूर्यस्य तावान् प्रकाशः कुत आगतः, ग्रहनक्षत्राणां स्वभावः कः? एतेषां स्रष्टा को वा भवति, दिन-पक्ष-मास-वर्षादीनां गणना कथं क्रियते, सूर्यस्य आकर्षणशक्त्यैव सर्वे ग्रहाः परितः सञ्चरन्तीत्यत्र कथं विश्वासः? इत्यादीनां बहूनां प्रश्नानां समाधानान्वेषणपरो नरः प्रथमं, नूतनविज्ञानविशेषावगत्यै वेदमेव प्रमाणतया स्वीकुरुते। यतः भारतदेशे सर्वेऽपि स्मृति-शास्त्र-पुराण-कल्पादिग्रन्थाः वेदमूलका एव भवन्ति। वेदे सूक्ष्मरूपेण. प्रतीपद्वारेण च कथिता विषयाः विस्तरेण एषु ग्रन्थेषु निरूपिताः।

ज्ञानार्थकात् विद्धातोः वेद शब्दो निष्पद्यते। वेदो नाम ज्ञानमेव। स च वेदः अपौरुषेयः। संहिताब्राह्मणारण्यकोपनिषदां समाहारो वेदशब्देनोच्यते। एष वेदश्चतुर्विधः। ऋग्यजुस्सामाथर्वभेदात्। देवतास्तुतिप्रधान ऋग्वेदः। न केवलमग्नीन्द्रवरुणोषस्मरुत्सवितृपूषमित्रविष्णुरुद्रपर्जन्यादि देवतास्तुतय एव क्रियन्तेऽत्र, अपि तु दार्शनिक, लौकिकविषयचर्चा अपि विराजन्ते। कानिचित् सूक्तानि निगूढार्थनिबद्धानि, विभिन्न व्याख्यानानां मूलानि च भवन्ति।

कालप्रभावेण प्रजानां धार्मिक, आर्थिक, साङ्घिक, परिस्थितिषु परिणामविशेषेण च सामान्यजनानां वेदमन्त्राणामर्थाः दुरवगाहास्सञ्जाताः। यस्मिन्नर्थे, यस्मिन् संदर्भे च मन्त्राः वैदिकर्षिभिः दर्शिताः ते मन्त्राः पण्डितानां पाण्डित्यप्रभावेण अर्थान्तरबोधका अभूवन्। केषाञ्चित् पदानामर्थविषये निघण्टुकारो यास्कोऽपि सन्दिदेह। मतान्तरप्रभावः, अर्थेऽनवगाहित्वं, भावेषु अनैक्यम्, व्याख्याग्रन्थानां पक्षपातित्वमित्येतत् सर्वं मिलित्वा वेदमन्त्राणामर्थनिर्णयविषये महोपद्रवं जनयामास।

अस्यां स्थितौ दयानन्दसरस्वति, अरविन्दघोष, आनन्दकुमारस्वामीत्यादि विमर्शकाः, वेदसंहितायां, ब्राह्मणेषु, पुराणेषु च विद्यामानाननेकांशान् क्रोडीकृत्य, मन्त्राणां मूलार्थं स्पष्टीकर्तुं प्रायतन्त। मन्त्राः न केवलं यज्ञयागादिक्रियापरा एव। एषु बहवो निगूढार्थाः भवन्ति। अत्र प्रयुक्ता इन्द्र, गो, अश्वादिशब्दाः आधुनिकविज्ञानशास्त्रप्रसिद्धशक्तिबोधका भवन्ति, अतस्तेषामर्थनिर्णये विशेषप्रयत्नः कर्तव्य इति तेऽवोचन्।

सूर्यस्योत्पत्ति : - सूर्यस्योत्पत्तिविषये शतपथब्रह्मणं वदति ''सोऽकामयत। भूय एव स्यात प्रजायेतेति। स वायुनाऽन्तरिक्षं मिथुनं समभवत्। तत आण्डं समवर्तत। तत अभ्यमृशत् यशो बृहतीति। ततोऽसावादित्योऽसृज्यत''[1] इति। अर्थात् प्रजापतेः कामनया वायोस्तथान्तरिक्षस्य च परस्परं संयोगेन आदित्यस्य जन्माभूदिति। तण्ड्यब्राह्मणे तु सूर्योत्पत्तिविषयेऽन्या रीतिर्दृश्यते ''प्रजापतिरकामयत - बहु स्यां प्रजायेयेति, सोऽशोचत्, तस्य शोचत आदित्यो मूर्ध्नोऽसृज्यत'' इति[2]। ऐतरेय ब्राह्मणे - ''तस्य यद्रेतसः प्रथममुददीप्यत, तदसावादित्योऽभवत्'' इति[3], पुरुषसूक्ते ''चक्षोः सूर्योऽजायत'' इत्येवं भिन्नवादा दृश्यन्ते। सोऽयं सूर्यः समस्तप्राणिकोटेराधारभूतः - ''आदित्येन वा व सर्वे लोका महीयन्ते''[4]। जनानां बलमोजश्च सूर्यदेव जायते -

"येनेमा विश्वा भुवनानि तस्थुः, ततः क्षत्रं बलमोजश्च जातम्"[5] न केवलं जङ्गमानामेव स हितकारकः, अपि तु स्थावराणामपि। -"आप्राद्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च"[6]। किञ्च भूमौ समस्तशक्तीनामपि "सूर्य एव आधार इति वर्णितः - "आदित्यः सर्वोऽग्निः पृथिव्याम्"[7]। आरोग्यं, जनानां सुखजीवित्वमपि सूर्यादेव "आरोग्यं भास्करादिच्छेत्" इत्यादि बहुभिः प्रमाणैः सूर्यः मानवविकारस्य, जीवनस्यैवाधारभूत इति ज्ञायते। अत एवावश्यं सवितुः स्तुतिः कर्तव्येति श्रुतिर्वदति- "मही देवस्य सवितुः परिष्टुतिः" इति।

मानवः विज्ञानाभिलाषी। स बहुप्रयत्नान् कृत्वा निरन्तरं नूतनांशशोधनायैव प्रयतते। तस्मिन् कदाचित् भ्रमप्रमादा अपि संभवेयुः। बुद्धिः सर्वदा भ्रान्तिपरिवेष्टिता भवति। सत्यशोधनायेतरेषां साहाय्यमत्यावश्यकम्। तत्र किं प्रमाणरूपेण स्वीकर्तव्यम्, कथं वा शोधनं कर्तव्यमित्यत्र श्रुतिर्वदति-

"स्मृतिः प्रत्यक्षमैतिह्यम्; अनुमानचतुष्टयम्।
एतैरादित्यमण्डलम्। सर्वैरेव विधास्यते"[9] इति॥
अतः अनुमानप्रमाणेनैव बहवोंऽशाः निर्धार्या भवन्ति।

आधुनिकशास्त्रज्ञाः सूर्यगोलस्य व्यासपरिधिः - 8,64,000 Miles इति, तत्र उष्णोग्रता $10,800^0$ F इति वदन्ति।

बुध-भू-गुरु-शुक्रादिग्रहाः सर्वेपि सूर्यं परितः भ्रमन्तीति, सूर्यस्तु न भ्रमति इति च वर्णितम्। एष सूर्यः स्वशक्त्या भूमिमेनां स्वपरितः भ्रामयति - "मित्रो दाधार पृथिवीमुतद्याम्"। कथं धारयतीति प्रश्ने "शक्त्या"। का च सा शक्तिः ? इत्यत्र आधुनिकशास्त्रज्ञा वदन्ति - Electro Magnetic Power इति।अस्या एव शक्तेः "इन्द्र" इति व्यवहारः।

"यः पृथिवीं व्यथमानामदृंहत्
यः पर्वतान् प्रकुपितामरभ्णात्
योन्तरिक्षं विममे वरीयो
यो द्यामस्तदभ्नात् स जनास इन्द्रः" [10]

"व्यस्तभ्ना रोदसी विष्णवेते, दाधर्थपृथिवीमभितो मयूखैः"[11]

सूर्यात् प्रतिक्षणमनन्तशक्तिरुद्भवति। एषा शक्तिः सूर्यस्य कथमागता इत्यत्राधुनिका वदन्ति - सूर्यगोले उदजनिवायुः 80% अस्तीति, प्राणवायुः 20% अस्तीति, उदजनिरेव, प्राणवायुना मिलित्वा "हीनियम्" नामा वायुस्सन् प्रकाशं जनयतीति। वैदिकर्षयस्तु - वायोः, अपाम्, अग्नेश्च संयोगेन एषाऽनन्तशक्तिरुद्भवतीति वदन्ति। सूर्यस्य विद्यमानेषु नामसु "अस्मापृश्नि" रन्यत्। "मध्ये दिवः निहितः पृश्निरश्मा विचक्रमे रजसस्पात्यन्तौ"[12] अयमस्मापृश्निशब्दः विद्युद्बोधकः। शतपथब्राह्मणे सूर्यः "विद्युत्वान्" इति कथितः। "अश्महँ वै तमश्मा इत्याचक्षते"[13]। अथ पृश्निशब्दस्य कोऽर्थ इति चेत् - "पृश्निर्भवति - रश्मिभिर्हि मण्डलम्"। रश्मिमण्डलं = रश्मिसमूह एव पृश्निः [Collection of beans] आधुनिकाः 'अस्मापृश्नि' शब्दस्य - VIBGYOR इति वर्णसमूहो, गर्भे विद्युतं च ध्रियमाणः कान्तिसमूह इत्यर्थं वदन्ति। अयं विषयः वैदिकर्षिभिः बहोः कालात् पूर्वमेव प्रकटीकृतः।

"आरोगो भ्राजः पटरः पतङ्गः स्वर्णरो ज्योतिषीमान् विभासः ते अस्मै सर्वे दिवमातपन्ति, ऊर्जं दुहाना अनपस्फुरन्त इति"[14]।

---

तेषां वर्णानां विभाग एवं क्रियते

| | | | | | |
|---|---|---|---|---|---|
| आरोगः | — | Red | पटरः | — | Blue |
| भ्राजः | — | Orange | पतङ्गः | — | Green, |
| स्वर्णरः | — | Yellow | ज्योतिषीमान् | — | Indigo |
| | | | विभासः | — | Violet इति। |

सूर्यस्य "संवत्सर" इत्यपि व्यवहारोऽस्ति।

असावेव संवत्सरो योऽसौ तपति, तस्य यद् भाति तत् संवत् यन्मध्ये कृष्णं मण्डलं तत् सरः"[15] सूर्यस्य बाह्यं यन्मण्डलं तस्य संवदिति, तस्य मध्येदृश्यमानकृष्णच्छाया "सर" इति व्यवह्रियते। "कृष्णं मण्डलं तत्सरः"[16] अत एव सूर्यस्य संवत्सर इति व्यवहारः । आधुनिकविज्ञानी Karl Kiepenhever एवमभिप्रैति - [17] "What is sunspot? Each dark nucleus called the umbra (सरः correspondes to the umbra of Modern Physics) and a border called the Penumbra. (Penumbra is a term synonymous with the vedic संवत्) Naturally the umbra is not completely black, and only appears to be so in contrast to the very much brighter back ground." thus.

सूर्ये विद्यमानौ एतौ कृष्णवर्णप्रकाशावेव "अहोरात्र" इति व्यवह्रियेते "अहोरात्रावेव कृष्णाजिनस्य रूपम्। अहरेव शुक्लस्य रूपम्, रात्रिः कृष्णस्य । अथ यदेतन्मण्डलं ता आपस्तदन्नं तदमृतम्"[18] । (The entire surface is like the deerskin. The अहः is the white, bright form, and रात्रिः the dark spot in the interior). अन्ये आधुनिकशास्त्रज्ञाः, सूर्ये विद्यमानानि सरांसि समूहरूपेण सञ्चरन्तीति, एतेषां संख्याऽस्थिरेति, इतरग्रहाणां प्रभावेणैतेषामुत्पत्तिरुत्थाननाशचलनानि गणयितुं शक्यमित्यूचुः । वैदिकर्षयस्तु "आपः" तथा "आग्नेयाः" (Electrons and neutrons) एतेषां क्षोभणेनैव सरांस्युत्पद्यन्ते" इति निरूपितवन्तः ।
"एतदादित्यमध्ये क्षोभत इव"[19]

**सूर्यप्रकाशः (Solar Radiation)**

कान्तिदायकः आकाशः, दीपः कृमि र्वा, तदन्तर्गत धनावेशवतामणूनां (Electrons) सहकारेणैव कान्तिजनका भवन्ति। एतत् कान्तिप्रजनकगुणस्य अणुतत्त्वस्य (Atomic nucle) 'रश्मि' इति व्यवहारः। सूर्यचन्द्रौ, नक्षत्राणि, वायवः, मरुतश्च एते सर्वेऽधिककान्तिप्रेरका अत एव भवन्ति। एतेषां कारणेनैव सौर्यजगत् सर्वमपि सुस्थिरं जातम्।

"मासा रश्मयः, रश्मयो मरुतः, तैरसावादित्यो धृतः"[20]

एते रश्मयः कदाचित् सूर्ये अधिकतापशक्तिकारकाः भवन्ति। तेन भूमावपि सूर्यकिरणप्रभावेण जलस्योष्मरूपेण परिणामः, मेघानां प्रादुर्भावः वर्षस्य कारणानि च भवन्ति। तेन भू वातावरणे तौल्यस्थितिर्जायते। एते रश्मयः मरुत्स्वपि सन्ति। मरुत्सु विद्यमानानां रश्मीनाम् "अभीशवः" इति व्यवहारः। "स्थिरा वः सन्तु नेमयो रथा अश्वास एषां सुसंस्कृता अभीशवः"[21]। एवं "क्व वोऽश्वाः, क्वाभीशवः, कथं शेक. कथं यय"[22] इति कथितम्। सर्वेऽपि कान्तिजनकाश्चेत् - को भेद इति चेत् सूर्यकान्तिरतीव

परोपदेशपाण्डित्यं सर्वेषां सुकरं नृणाम्।
धर्मे स्वीयमनुष्ठानं कस्यचित्तु महात्मनः॥

शुद्धा, अत्यन्तं श्वेता च भवति। ''स्वयम्भूरसि श्रेष्ठो रश्मिः'',[23] ''एष वै श्रेष्ठो रश्मिः यत्सूर्यः''[24]

अन्येषां किं वा रूपमितिसन्देहे - ''बहूनि वै रश्मिनां रूपाणि''[25] सूर्यस्य सहस्रकिरणः, सहस्ररश्मिः इत्यादि व्यवहाराः सन्ति। लौकिकप्रयोगे तावत् किरणानां, मयूखानां च यद्यपि भेदः नास्ति। किन्तु यास्काचार्यः स्वग्रन्थे[26] कान्तिप्रजनकगुणवति अणुतत्त्वे 15 भेदास्सन्तीति, तेषां रूपं, सान्द्रतां, भिन्नतां च आधारीकृत्य भेदो द्रष्टव्य इति वदन् तेषां नामान्युदाहृतवान्। यथा-

| | | | |
|---|---|---|---|
| 1. खेदयः | 2. किरणाः | 3. गावः | 4. रश्मयः |
| 5. मरीचिपाः | 6. साध्याः | 7. अभीशवः | 8. दीधितयः |
| 9. गभस्तयः | 10. मयूखाः | 11. सुपर्णाः | 12. वनम् |
| 13. उस्राः | 14. वसवः | 15. सप्त ऋषयः | |

इति। तथा सूर्यस्य 'सहस्र' इति प्रख्यातेषु रश्मिषु त्रयः विभागाः प्रदर्शिताः - चित्रमूर्तयः, हिमसर्जनाः, घर्मसर्जना इति। चित्रमूर्ति रश्मिसमुदायः वर्षहेतुर्भवति। हिमसर्जनाः, हिम-वातानां, हिमान्याश्च कारणानि भवन्ति। धर्मसर्जन इति नाम्ना व्यवहृतानां 'कुहकाः', 'ककुभः', 'गावः', विश्वभृतः', इत्यनेकानि नामानि सन्ति। एतेषां सामान्य व्यवहारस्तु 'गाव' इति। यथा गावः मनुजानामुपयोगकराः, तथा गोसाम्यात् किरणानामेषामपि 'गो' इति व्यवहारः। वेदे, ब्राह्मणेषु च गवां बहुधा प्रशंसा कृता। ''गौर्वा इदं सर्वं बिभर्ति''[27]।

एवं संहिता-ब्राह्मणा-रण्यकानां परिशीलनेन सूर्यविषये बहवो नूतनविषया अवगता भवेयुरिति दिङ्मात्रमत्र प्रदर्शितम्।

1. शतपथब्राह्मणम् - 6-1-2-3
2. ताण्ड्यब्राह्मणम् - 6-5-1
3. एतरेयब्राह्मणम् - 3-34
4. तैत्तिरीयारण्यकम् - 7-5
5. Ibid - 3-11
6. Ibid - 1-4-43
7. तैत्तिरीयारण्यकम् - 1-20
8. तैत्तिरीय संहिता - 4-1-1
9. तैत्तिरीयारण्यकम् - 1-2
10. ऋग्वेदः - II-12-2
11. Ibid - VII - 99-3
12. Ibid - V - 47,3
13. शतपथब्राह्मणम् - VI 1-2-3
14. तैत्तिरीयारण्यकम् - 1-17.
15. जैमिनि ब्राह्मणम् - I 330
16. Ibid
17. The Sun - Page - 82
18. जैमिनि ब्राह्मणम् -II-62
19. छान्दोग्योपनिषत् - III-1-4
20. जैमिनि ब्राह्मणम् I- 137
21. ऋग्वेदः - I -38-12
22. Ibid - V61-2
23. यजुर्वेदः - II -26
24. शतपथब्राह्मणम् - I - 1-3-16
25. मैत्रायणिसंहिता - II -2-21
26. यास्कनिरुक्तम् - I .5
27. शतपथब्राह्मणम् -9-2-14.

# काव्यशास्त्रीयः चमत्कारविचारः

डा. रविशंकर मेनोन्
वरिष्ट व्याख्याता

इह अनायासेन अल्पधियामपि सानन्दं सकलविधैहिकायुष्मिकफलप्रदायकं काव्यं तस्य च स्वरूपप्रदर्शकं तत् तत्त्वप्रतिपादकं च शास्त्रं क्रियाकल्प-काव्यशास्त्र-काव्यानुशासनमलङ्कारशास्त्रमित्यनेकैरभिधानैरभिधीयमानम् अन्ततः शब्दार्थयोरनितरसाधारणसम्बन्धं स्वीकृत्य तयोः परस्परसापेक्षयोरेकक्रियान्वयित्वात् तयोरेव पुनः विन्यासविशेषपाटवेन हितेनास्वाद्ययोः शब्दार्थयेरेव विचारविशेषात् शब्दार्थयोर्यावत् सहभावेन विद्या साहित्यविद्या इति प्रसिद्धिमवाप्य साहित्यशास्त्रमिति नाम्ना इदानीं लोके व्यवह्रियमाणं विदितमेव विदुषाम्। अत्र च शास्त्रे सकलशास्त्रोपनिषद्भूतं काव्यमेव विचार्यते। पुनश्चास्य शास्त्रस्य सकलशास्त्रोपयोगित्वं लोकेऽङ्गीकृतमेव। उक्तं च काव्यमीमांसायां राजशेखरेण - ''पञ्चमी साहित्यविद्या इति यायावरीयः। सा च चतसृणामपि निष्यन्दः'' इति। मुकुलभट्टोऽपि —

पदवाक्यप्रमाणेषु यदेतत् प्रतिबिम्बितम्।
यो योजयति साहित्ये तस्य वाणी महीयते ॥

इति वदति। अत्र च शास्त्रे काव्यलक्षणविधायकैराचार्यैः काव्यतत्त्वविद्भिश्च काव्यस्वरूपप्रदर्शकानि आस्वाद्यतत्त्व प्रदर्शकानि च प्रस्थानानि प्रदर्शितानि। बहुधा चास्य शब्दार्थशरीरस्य काव्यस्य नियतं किमपि लक्षणमाधातुं प्रयासश्च कृतः। परं ''हस्त्यन्धन्यायेन'' येनाचार्येण यदनुभूतं तदेव काव्यलक्षणत्वेन आस्वाद्यविषयत्वेन वा स्वीकृतम्। स्वमतोपस्थापनाय महता प्रयासेन तर्का अपि उपस्थापिताः, प्रस्थानप्रतिपादका ग्रन्थाश्च रचिताः। तथाऽपि मनोमात्रसंवेद्यस्य आनन्दमयस्वभावस्यास्य काव्यस्य नियतं किमपि लक्षणमेतावता प्रदर्शयितुं न पारितम्। ''प्राधान्येन व्यपदेशा भवन्ति'' इति न्यायेन यन्मूलकश्चमत्कारः तन्मूलकमेव नामग्रहणं विहितमवलोक्यते। वस्तुतः ब्रह्मास्वादसहोदरस्यास्य अनियतलक्षणत्वं भूषणं न तु दूषणम्। ''एकं सद् विप्रा बहुधा वदन्ति'' इति यत् अनियतमेव पुनः पुनरनुसन्धानाय हेतुभूतं भवति। परं चमत्कारत्ववत्वमेव काव्यमित्यत्र विदुषामेकरूपता वरीवर्ति। इदं तु सर्वसम्मतं यत् काव्यपदावली सामान्यपदावलीतः भिन्ना चमत्कारजनकस्यार्थस्य बोधने क्षमा येन च बोधेन सहृदयाः कमप्यनिर्वचनीयमानन्दमनुभवन्तीति। उक्तं हि नीलकण्ठदीक्षितेन शिवलीलार्णवे -

यानेव शब्दान् वयमालपामो
यानेव चार्थान् वयमुल्लिखामः।
तैरेव विन्यासविशेषभव्यैः
संमोहयन्ते कवयो जगन्ति॥ इति।

''यदपि तदपि रम्य''मिति ध्वन्यालोकीयायाः कारिकायाः स्फुरितमित्यस्य व्याख्याने स्फुरणीयं काचिदिति सहृदयानां चमत्कृतिरुत्पद्यते इति विवृतम्। चमत्कारत्वमाधारीकृत्य तस्य च चमत्कारस्य तारतम्यतां मानदण्डत्वेन स्वीकृत्य काव्ये उत्कर्षहेतुभूतानां गुणालङ्काररीतीनाम् आस्वाद्यव्यञ्जकानां रसादीनां च स्थितिरुपादानं त्यागो वा निर्णीयते। यन्मूलकं च चमत्कारः तन्मूलकं नामग्रहणमिति नीतिरपि निर्धारिता भवति।

---

कविः करोति काव्यानि लालयत्युत्तमो जनः।
तरुः प्रसूते पुष्पाणि वायुर्वहति सौरभम्॥

पण्डितराजजगन्नाथेनापि रमणीयार्थप्रतिपादकः शब्दः काव्यमिति लक्षितस्य काव्यस्य लक्षणविवरणावसरे रमणीयता च लोकोत्तराह्लादजनकतज्ज्ञानगोचरता। लोकोत्तरत्वं चाह्लादगतः चमत्कारत्वापरपर्यायः अनुभवसाक्षिको जातिविशेष इति प्रदर्शितम्। अग्रे च चमत्कारजनकभावनाविषयार्थप्रतिपादकशब्दत्वं यत्प्रतिपादितार्थविषयकभावनात्वं चमत्कारजनकतावच्छेदकं तत्त्वं स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकसंसर्गेण चमत्कारत्ववत्वमेव वा काव्यत्वमिति प्रतिपादितम्। चमत्कृतिं प्रदर्शयितुं सौन्दर्यव्याख्यायामपि चमत्कार एवं लक्षितः। सौन्दर्यं च चमत्काराधायकत्वं, चमत्कृतिरानन्दविशेषः सहृदयहृदयप्रमाणक इति।

चमत्कारवत्वमेव काव्यत्वमिति सिद्धान्ते स्वीकृते सति सर्वेऽपि काव्यतत्त्वविषयाः तत्रैव संमिलिताः भवन्ति। ध्वनिगुणीभूतव्यङ्ग्यचित्रकाव्यभेदरूपाः अपि चमत्कारस्य उत्कर्षापकर्षतामवलोक्य एव निर्णीयन्ते। सहृदयहृदयाह्लादोऽपि अमुमेव चमत्कारमाधृत्य भवति।

दण्डिनः इष्टार्थः, वामनस्य सौन्दर्यं, ध्वनिकारस्य सहृदयहृदयाह्लादकता, कुन्तकस्य स्वस्पन्दसुन्दरता, क्षेमेन्द्रस्यौचित्यं, विश्वनाथस्य रसात्मकता, पण्डितराजस्य रमणीयता प्रभृतयः सर्वेऽपि चमत्कारे समवेता भवन्ति।

काव्यनाटकादीनामास्वादनवेलायामलौकिकः यः आनन्दोऽनुभूयते सः क्वचित् चारुपदावलीतश्चेदन्यत्राह्लादकारिभ्यः अर्थेभ्यः संभवति। उभयत्रापि भाषया विचारेण वा चमत्कारजन्यः आह्लाद एव भवति।

अयं तु विचित्रः संयोगः यत् यथा काव्यशास्त्रे आस्वादापरपर्यायः "रस" इति प्रयोगः पाकशास्त्रादागतः तथा चमत्कार इति प्रयोगोऽपि पाकशास्त्रीयः काव्यशास्त्रे समागत्य प्राधान्यतामाप्नोत्। पाकशास्त्रे विलक्षणरसपूर्णस्य स्वादुभोजनस्य चिन्तनमात्रेण तदाघ्राणेन वा तदास्वादनेन वा यो हि असामान्यः जिह्वास्वादः भवति स एव चमत्कारपदव्यवहारार्हः। अयमेव पुनः परिणतिं प्राप्य विचारचमत्कारस्य प्रयोगचमत्कारस्य कृते च प्रयुज्य काव्येष्वपि सहृदयहृदयाह्लादस्य पर्यायरूपेण प्रयुक्तो दृश्यते। व्याख्यातृभिश्च, बहुधास्य पदस्य विस्तृतं विवरणं दत्तं काव्यनाटकादीनां व्याख्यानावसरे। तद्यथा-

"सचमत्कारं चमत्कारसहितं यथा तथा। चमित्यनुकरणशब्दः। चमत्कारलक्षणं तु सुखदुःखाद्‌भुतानन्दै-र्हर्षाद्यैश्चित्तविक्रिया। चमत्कार ससीत्कारः शरीरोल्लासनादिभिः" इति। (चम्पू रामायणम्, युद्धकाण्डः रामचन्द्रबुधेन्द्रस्य व्याख्या)

साहित्यदर्पणकर्तुः विश्वनाथकविराजस्य पितामहस्य नारायणस्य रसास्वादविषयकमभिमतं यत् प्रदर्शितं तत्रापि चमत्कार एव रसास्वादस्य प्राणः इत्यभिहितमवलोक्यते। उक्तं च-

रसे सारः चमत्कारः सर्वत्राप्यनुभूयते
तच्चमत्कारसारत्वे सर्वत्राप्यद्‌भुतो रसः।
तस्माददद्‌भुतमेवाह कृती नारायणो रसम्॥ इति।

ध्वन्यालोकेऽपि चमत्कार एव काव्यस्य इतरभेदबुद्धौ व्यावर्तक इति प्रमाणितः। "चमत्कारो हि इति स्वात्मन्योन्यापेक्षे विश्रमणम्। चमत् इति क्रियाविशेषणम् . . . . एवमास्वादो रसानामात्मा चमत्कारः" इति। कुन्तकोऽपि वक्रोक्तिजीविते -

लोकोत्तरचमत्कारकारिवैचित्र्यसिद्धये।
काव्यस्यायमलंकार कोऽप्यपूर्वो विधीयते॥

---

वनानि दहतो वह्नेः सखा भवति मारुतः।
स एव दीपनाशाय कृशे कस्यास्ति गौरवम्॥

चतुर्वर्गफलास्वादमप्यतिक्रम्य तद्विदाम्।
काव्यामृतरसेनान्तश्चमत्कारो वितन्यते॥

इत्यादिभिः अन्यत्र च ग्रन्थे बहुधा चमत्कारतत्त्वस्य काव्यकरणे तदास्वादे च प्रधानतां प्रदर्शितवान्।

चमत्कारतत्त्वस्य विस्तृतं विवरणं कविकण्ठाभरणे क्षेमेन्द्रेण दत्तमवलोक्यते। अस्य च ग्रन्थस्य सन्ध्याख्येष्वध्यायेषु तृतीयस्य नाम चमत्कारकथनमित्यस्ति। तत्र च चमत्काररहितायाः कविरचनायाः काव्यत्वमिति कल्पनाऽपि कर्तुं न शक्यत इति विलिख्य चमत्कारं लक्षयित्वा तस्य दश भेदा अपि प्रदर्शिताः। उदाहरणानि च दत्तानि।
''न हि चमत्कारविरहितस्य कवेः कवित्वं काव्यस्य वा काव्यत्वम्''
''वाचां चमत्कारविधायिनीनां नवार्थचर्चासु रुचिं विदध्यात्'' इत्युपदिष्टाः सहृदयाः।

चमत्कारस्यैवोपादेयता इति प्रदर्शयितुं-

एकेन केनचिदनर्घमणिप्रभेण
काव्यं चमत्कृतिपदेन विना सुवर्णम्।
निर्दोषलेशमपि रोहति कस्य चित्ते
लावण्यहीनमिव यौवनमङ्गनानाम्॥

इत्युदाहरणपद्यमपि दत्तम्। अग्रे च चमत्कारयुक्तस्य चमत्काररहितयोश्च पद्ययोरुदाहरणमुखेन स्वमतमुपस्थापितम्। दशविधश्चमत्कारोऽयम्। यथा- अविचारितरमणीयः, विचारितरमणीयः, समस्तसूक्तव्यापी, सूक्तैकदेशदृश्यः, शब्दगतः, अर्थगतः, शब्दार्थगतः, अलङ्कारगतः, रसगतः, प्रख्यातवृत्तगतश्च इति।
औचित्यविचारचर्चायामपि

औचित्यस्य चमत्कारकारिणश्चारुचर्वणे।
रसजीवितभूतस्य विचारं कुरुतेऽधुना॥

इत्यनया कारिकया औचित्मपि चमत्कृत्यर्थमिति प्रदर्शितम्। पुनश्चेयं कारिका भामहादीनां हृद्यता-चारुता-सौन्दर्यादिभिरभिमतं चमत्कारं प्रदर्शयति।

परं रसध्वनिगुणालङ्काररीतिवत् प्रस्थानरूपेण चमत्कारस्य प्रतिपादकग्रन्थस्तु विश्वेश्वरस्य चमत्कारचन्द्रिका एव। नाम्ना एव ज्ञायते यदत्र चमत्कारः सविस्तरं लक्षितः इति। यथा -

चमत्कारस्तु विदुषामानन्दपरिवाहकृत्।
गुणं रीतिं रसं वृत्तिं पाकं शय्यामलंकृतिम्॥
सप्तैतानि चमत्कारकारणं ब्रुवते बुधाः। इति।

काव्यप्रयोजनविवरणावसरेऽपि -

नृणां विधौ निषेधे च शिक्षा काव्यप्रयोजनम्।

पृथिव्यां त्रीणि रत्नानि जलमन्नं सुभाषितम्।
मूढैः पाषाणखण्डेषु रत्नसंज्ञा विधीयते॥

शिक्षा च सचमत्कारं चोदिता स्थिरतां भजेत् ॥

इत्यनेन चमत्कारयुक्तस्यैव काव्यस्य शिक्षादिषु प्रधान्यं प्रदर्शितम्।

चमत्कृतिमधिकृत्य काव्यस्य त्रयो भेदाश्च प्रदर्शिताः। चमत्कारि (शब्दचित्रम्) चमत्कारितरं (अर्थचित्रं गुणीभूतव्यङ्ग्यम्) चमत्कारितमम् (व्यङ्ग्यप्रधानम्) इति।

काव्यालोके तु हरिप्रसादेन "काव्यस्यात्मा चमत्कृतिः" इति सिद्धान्तः स्थिरीकृतः यथा -

विशिष्टा शब्दरूपस्य काव्यस्यात्मा चमत्कृतिः।
उत्पत्तिभूमिप्रतिभा मनागत्रोपपादितम् ॥ इति।

शब्दवृत्तिविचारकेणाऽलङ्कारिकेणाशाधरभट्टेनाऽपि चमत्कारविषयमधिकृत्यैव काव्यादीनां भेदः निर्णीतः। काव्यादिषु शब्दजन्यमर्थज्ञानं त्रिविधं - चारु, चारुतरं, चारुतमं चेति। तत्र शक्तिजन्यं चारु - लक्षणाजन्यं चारुतरम् - व्यञ्जनाजन्यं चारुतमं भवति। त्रिवेणिकायां तु -

शक्तिं भजन्ति सरला लक्षणां चतुरा जनाः।
व्यञ्जनां नर्ममर्मज्ञाः कवयः कामनाजनाः ॥

इति विलिख्य चमत्कारवत्त्वमेव काव्यत्वमिति प्रदर्शितम्। एवं चमत्कारत्ववत्त्वमेव काव्यत्वमिति स्थिरीकृतमाचार्यैः।

---

# यज्ञे वधोऽवधः

डा. का. ई. देवनाथन्
वरिष्ठव्याख्याता

''अग्नीषोमीयं पशुमालभेत'' इति वाक्यमग्नीषोमीययागविधायकम्। तद्यागे पश्वङ्गभूतायाः वपायाः होमो विधीयते। तत्र विशसनप्रकारः तैत्तिरीयसंहितायां पठितः यथा -

'हृदयस्याग्रेऽवद्यति, अथ जिह्वायाः, अथ वक्षसः' (तै.सं-6-3-10) इति। एवमादि यागेषु पशुहिंसायाः विहितत्वात्, हिंसायाश्च ''न हिंस्यात् सर्वभूतानि'' इति निषिद्धत्वात् किं ते यागा अनुष्ठेयाः? इति संशयः।

तत्र पूर्वमीमांसायामेवं समाधानं विहितम् ''न हिंस्यात्'' इति उत्सर्गः। अग्नीषोमीयं पशुमालभेतेत्यादिः विधिरपवादः। अतः उत्सर्गापवादन्यायेन विरोधशमनं कार्यमिति।

इदानीमत्र श्रीमद्वेदान्तदेशिकानामाशयं विवृणुमः। भगवद्रामनुजार्याः श्रीभाष्ये हिंसालक्षणमेव यागपशुविषये न भवतीत्याहुः। तदनुसृत्य वेदान्तदेशिका अपि सर्वार्थसिद्धौ -

अयमत्र विभागः। अग्नीषोमीयपश्वालम्भनस्य हिंसात्वमभ्युपगम्य ''आलभेत'' इति विधिबलात् ''न हिंस्यात्'' इति निषेधस्य संकोचमाहुः केचित्। अपरे पुनः श्रुतिस्मृतिबलात् हिंसात्वमेव नाभ्युपगच्छन्ति। अल्पीयसा दुःखेन अधिकसुखप्राप्तिहेतोः अहिंसात्वात्। ''न म्रियसे नरिष्यसि'' (तै.सं- 4-6-9) इति श्रुतत्वाच्च इति इति यज्ञे पशुवधः न हिंसां प्रतिपादयन्ति। अत्र ''अपरे पुन'' इत्यारभ्य यज्ञे वैधो वधो न हिंसेत्येव आहुराचार्याः।

''अशुद्धामिति चेन्न शब्दात्'' इति सूत्रे श्रीभाष्ये यज्ञे प्राणिवधः चिकित्सावत् प्राणिहितकारीति कथं हिंसा स्यादित्याहुः श्रीभाष्यकृतः।

गीतायाः ''य एनं वेत्ति हन्तारम्'' इति श्लोकव्याख्याने भगवद्रामानुजभाष्यमिदम्।
''न हिंस्यात् सर्वभूतानि'' ''ब्राह्मणो न हन्तव्यः'' इत्यादीन्यपि अविहितशरीरवियोगकरणविषयाणि।

तत्र तात्पर्यचान्द्रिकायां ''पराभिमतप्रक्रियायाः उत्सर्गापवादाद्वा, स्वमतेन विहितशरीरवियोगकरणस्य पशुशत्रुप्रभृतीनामपि हिततमत्वेन हिंसात्वस्यैव अभावाद्वा इति भावः'' इति आचार्याः तत्र हिंसत्वाभावमेव समर्थयन्ति।

अन्यत्रापि तात्पर्यचन्द्रिकायां ''स्वधर्ममपि चावेक्ष्य'' इति श्लोकव्याख्यानसंदर्भे प्रकृते उत्सर्गापवादन्यायः प्रवर्तते, अथवा ''न हिंस्यात्'' इति निषेधप्रवृत्तिरेव नास्ति इति पक्षद्वयमपि ऊरीकृतमाचार्यैः।

प्रबलं विशेषशास्त्रं निषेधशास्त्रात् निषेधस्य अप्रसक्तिं वा स्मारयति॥

विशिष्टाद्वैतिनः यज्ञे प्राणिवधस्य हिंसात्वमेव नास्तीति वदन्ति। तेषामयमभिप्रायः। यागे पशोः यो वधः स तस्य हितमेव। न हि लोके हितकारिणं हन्तेति वदामः। वेदः ''सुवर्गं याहि पथिभिः देवयानैरोषधीषु प्रतितिष्ठा शरीरैः'' (वै.सं.3.1.4) इति तस्य पशोः दिव्यशरीरेण सह स्वर्गप्राप्तिं वक्ति। अतोऽयं वधो न हिंसेति।

---

अधोऽधः पश्यतः कस्य महिमा नोपचीयते।
उपर्युपरि पश्यन्तः सर्व एव दरिद्रति॥

तर्हि किं नाम हिंसात्वम्? आचार्या आहुः - ''अनर्थप्रापकव्यापारत्वं हिंसालक्षणम्। अत्र तु तद्विपरीतत्वेन रक्षणत्वमेव उक्तमिति मन्त्रलिङ्गेन ज्ञापयति'' इति। अत्र पशुवधः अनर्थप्रापको व्यापारो न, तस्य स्वर्गप्राप्तिरूपपुरुषार्थस्यैव संभवादिति अभिप्रयन्त आचार्याः प्रकृते हिंसालक्षणाभावमुपपादयन्ति। तथाहि - यदि दुःखजननं हिंसा, तदा वैद्योऽपि चिकित्साकाले प्राणिनां दुःखं जनयत्येव। सोऽपि छुरिकया यदा अङ्गेषु शल्यप्रयोगं करोति तदा महद्दुःखं जायत एव। यदि प्राणहरणमेव हिंसेत्युच्यते, तदा प्राणहरणं विना क्रियमाणं कार्यमङ्गानां खण्डनम्। चौर्यं, कशाताडनमित्यादि हिंसा न स्यात्। अतः अनर्थपर्यवसितः तादात्मिकदुःखजनको व्यापार एव हिंसेति स्वीकृतमाचार्यैः। ''स्वधर्ममपि चावेक्ष्य'' इति श्लोकस्य तात्पर्यचद्रिकायामुक्तं च तैः ''न तावदिह दुःखजननमात्रं हिंसा, रक्षणरूपेषु चिकित्सकशल्यप्रयोगादिष्वपि प्रसङ्गात्। नापि प्राणवियोजनमात्रं, अतद्रूपेषु सर्वस्वहरणनरकपीडादिषु हिंसाशब्दप्रयोगदर्शनात्। अतोऽनर्थपर्यवसितः तादात्विकदुःखजनको व्यापारो हिंसेत्येव तत्त्वम्'' इति।

एवमादिहिंसालक्षणानि उपनिषद्भाष्यकारादिभिरपि कृतानि।

ननु ''अहिंसन् सर्वभूतानि अन्यत्र तीर्थेभ्यः'' इति छान्दोग्यश्रुत्या मुमुक्षुः यागपशुहिंसाव्यतिरिक्तां हिंसां न कुर्यादिति लभ्यते। एवं ''यज्ञे वधोऽवधः'' इति मनुस्मृतिरपि यागे क्रियमाणो वधो न वध इति वदन्ती यागपशुवधं स्वीकुर्वन्ती पशुविषयकव्यापारस्य हिंसात्वमपि सूचयतीति चेन्न, यागीयपशोः यः उत्कर्षो लभ्यते तदनभिज्ञाः पामराः तद्व्यापारं हिंसेति ब्रूयुः, तद्दृष्ट्या श्रुतिः प्रवृत्ता। मनुनापि पामरदृष्ट्यैव यज्ञे वधः इत्यत्र वधशब्दः प्रयुक्तः। अन्यथा ''अवध'' इति उत्तर पदस्य अनन्वयापत्तेः। एता आचार्यसूक्तयः -

ननु ''अहिंसन् सर्वभूतानि अन्यत्र तीर्थेभ्यः'' इत्यादिना अग्नीषोमीयादेरपि हिंसात्वं प्रतीयते। अन्यथा ''अन्यत्र'' इति तद्व्यवच्छेदानुपपत्तेः। ततश्च ''अन्यत्र तीर्थेभ्यः'' इत्येतत् पश्वादेः भाविपुरुषार्थविशेषानाभिज्ञपामरदृष्ट्या उक्तम्। तस्मिन्नपि वाक्ये हिंसात्वं नास्तीत्येव तात्पर्यम्। उक्तं च मनुना - ''तस्मात् यज्ञे वधोऽवधः'' इति। तत्रापि वधः इति पामरदृष्ट्या। अवध इति तु तत्त्वकथनम्।

न्यायसिद्धाञ्जने आचार्याः ''यजमानेन सह पश्वादीनां स्वर्गादिगमनवद्वा मोक्षसिद्धिः। यजमानेन सहिताः स्वर्गं यान्ति नराधिप ! इति हि महाभारतोक्तिः'' इति आचार्यानुष्ठितात्मात्मामीयभरन्यासेन आचार्यशिष्ययोः पशुयजमानयोरिव सहैव मोक्षसिद्धिरिति प्रतिपादयन्तः यज्ञानुष्ठानस्य उत्तमत्वमुररीकुर्वन्ति। मनुरपि ''अत्मानं च पशूंश्चैव गमयत्युत्तमां गति''मिति प्राह।

यागपशुविषयकव्यापारः न हिंसेति आचार्या अधिकरणसारावलीग्रन्थेऽपि निरूपयन्ति।

उक्ता मन्त्रार्थवादैः पशुहितमिति सा तच्चिकित्सावदेषा।
ब्रूते यज्ञे वधोऽसाववध इति मनुः स्तौति निन्दा त्विहान्यत्॥ इति

अत्र व्याख्यातारः आचार्यपुत्राः वरदाचार्याः -

''भगवान् मनुः यज्ञे वधस्य वधत्वमेव नास्तीत्याह। हिंसात्वं नास्तीत्यर्थः। अशास्त्रीयमार्गेण प्राणवियोजने हि हिंसात्वं प्रसज्यते'' यथा राज्ञां युद्धे शत्रुवधो न हिंसा। सर्वत्र विषयभेदेन हि पुण्यापुण्यव्यवस्था। आत्महननमपि क्वचित् पुण्यकोटिमाटीकते। तेन न यज्ञादिषु हिंसा। न च तत्फलानुभवः। नापि विधिस्पृष्टो दोषः। नापि हिंसकत्वं वैदिकानामिति रमणीयमेतत्'' इति स्पष्टोऽर्थः।

कापिलास्तु यज्ञे हिंसायाः वैधत्वेऽपि यजमानस्य तया स्वल्पो दोषो भवतीति प्राहुः। तन्न युक्तम् - ''यज्ञो दानं तपश्चेति पावनानि मनीषिणाम्'' इति यज्ञादीनां पावनत्वोक्त्या यजमाने दोषावहत्वाभावात्। एतच्च कथितं तात्पर्यचन्द्रिकायां वेदान्तदेशिकैः-

''एवं पावनत्वोक्त्या त्याज्यं दोषवत् इति पक्षः प्रतिक्षिप्तः'' इति अत्र लघुनिबन्धे वेदान्तदेशिकानां यागपशुविषये निर्णयः संगृहीतः।

---

येन केन प्रकारेण यस्य कस्यापि देहिनः।
संतोषं जनयेत्प्राज्ञस्तदेवेश्वरपूजनम्॥

# पाणिनीयपदार्थविचारः

डा. जानमद्दि रामकृष्णः
वरिष्ठव्याख्याता

"द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्त पदार्थाः" [1]इति नैयायिकाः सङ्गिरन्ते।

"शास्त्रे पदार्थः कार्यार्थं लौकिकः प्रविभज्यते" [2]इति वदता भर्तृहरिणा पाणिनीये दश पदार्था न्यरूपिषत। ते चात्र प्रबन्धे संक्षेपेण विचार्यन्ते।

शास्त्रे विभक्ता वाक्यार्थात् प्रकृतिप्रत्ययार्थवत्।
निमित्तभूताः साधुत्वे शास्त्रादनुमितात्मकाः।
केचित्पदार्था वक्ष्यन्ते संक्षेपेण यथाऽऽगमम्॥[3]

इत्याह हरिः।

शब्दसाधुत्वविषये निमित्तभूता अत एव व्याकरणशास्त्रे विशिष्य गृहीताः व्याकरणशास्त्रादेव, अनुमानप्रमाणलब्धस्वरूपाः, द्रव्यगुणदिक्साधनक्रियाकालसङ्ख्यालिङ्गपुरुषोपग्रहाख्या दश पदार्थाः, व्याकरणशास्त्रमर्यादामनतिक्रम्य संग्रहेण वक्ष्यन्त इति तत्कारिकार्थः।

वाक्यपदीये पदकाण्डे चतुर्दश समुद्देशाः सन्ति। तत्र पूर्वोक्ताः द्रव्याद्युपग्रहान्ताः दश पदार्था विमृष्टाः। नैयायिकाद्युक्तद्रव्यादीनां पदार्थानां स्वीकारे व्याकरणशास्त्रानुसारेण लक्ष्याणि न सिध्यन्ति, प्रत्युत विपरीततया भवन्ति। अतस्तत्सिद्धान्तं त्यक्त्वा व्याकरणशास्त्रमात्रप्रसिद्धिमनुसृत्य पूर्वोक्तपदार्थानां लक्षणानि वक्तव्यानि। यद्यप्येतेषां लक्षणानि मुनित्रयेण कण्ठतो न प्रोक्तानि तथाऽपि तद्व्यवहारदर्शनेनानुमानप्रमाणेन तानि बोध्यन्त इति भर्तृहरेराशयः। तत्रादौ --

**1. द्रव्यलक्षणम् -**

वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः॥[4]

सर्वनामपरामर्शयोग्यं, विशेष्यत्वेन निर्णीतो वाऽर्थो द्रव्यमिति तदर्थः। अत्रेदं बोध्यम् - अयमर्थो विशेष्य इति निर्णये वक्तुरिच्छैव निमित्तम्। वक्ता यमर्थं विशेष्यत्वेन मनुते स द्रव्यं भवति। "पचति" इत्यादितिङन्तात् क्रिया विशेष्यत्वेन भासते। अतो द्वितीयलक्षणानुसारं क्रिया द्रव्यं भवति। किं पचति? इत्याकारकसर्वनामपरामर्शयोग्यत्वेन प्रथमलक्षणानुसारमपि सा द्रव्यमिति वक्तुं शक्यते। "युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः"1-4-105 "अस्मद्युत्तमः"1-4-107 "शेषे प्रथमः" 1-4-108 "इत्यादिसूत्रार्थनिर्णयावसरे क्रियाया द्रव्यत्वमपेक्षितम्।

**2. गुणलक्षणम् -**

संसर्गिभेदकं यद्यत् सव्यापारं प्रतीयते।

गुणत्वं परतन्त्रत्वात्तस्य शास्त्र उदाहृतम् ॥[5]

पराधीनस्यार्थस्य गुण इति व्यवहारो दृश्यते लोके। तादृशलोकप्रसिद्धार्थस्वीकारेण लक्षणमिदं प्रोक्तम्। स्वाश्रयेण सह स्थित्वा ''अयमितरेभ्यो भिन्नः'' इति स्वाश्रयं वैशिष्ट्येन बोधयति यः पदार्थः स गुण इति कथ्यते। ''समर्थः पदविधिः'' 2-2-1 ''तस्य भावस्त्वतलौ'' 5-1-119 इत्यादिसूत्र[6]भाष्येऽयं गुणपदार्थः समभ्युपगतः।

**3. दिग्लक्षणम् -**

व्यतिरेकस्य यो हेतुरवधिप्रतिपाद्ययोः।
ऋज्वित्येवं यतोऽन्येन विना बुद्धिं प्रवर्तते ॥
कर्मणो जातिभेदानामभिव्यक्तिर्यदाश्रया।
सा स्वैरुपाधिभिर्भिन्ना शक्तिर्दिगिति कथ्यते ॥[7]

(अ) अवध्यवधिमतोः, तदुभयोः सम्बन्धस्य च यो हेतुः, (आ) वस्त्वन्तराभावेऽपि यस्मात् ''ऋजु'' इत्येवं बुद्धिः प्रवर्तते, (इ) उत्क्षेपणापक्षेपणादिव्यापारस्य, विभिन्नजातीनामभिव्यक्तिर्यदाश्रया सा शक्तिः स्वीयैरुपाधिभिर्भिन्ना सती दिगिति व्यवह्रियत इति कारिकार्थः।

''वृक्षः कुत्रास्ति?'' इति प्रश्नस्य समाधये तत्समीपस्थानि वस्तून्यवधित्वेन प्रदर्श्य ''वृक्षः पर्वतात् पूर्वः'' इत्येवमुत्तरं दीयते। अतो वृक्षोऽवधिमान्, पर्वतोऽवधिः। तयोः सम्बन्धः केवलं वृक्ष-पर्वतनिमित्तको न। नापि पर्वतत्वादिजातिनिमित्तकः। अतः परिशेषाद् दिक्छक्त्याधारेणैव सम्बन्धोऽयं बोध्यते। एवम्, ऋजुरयं दण्डः, वक्रोऽयं दण्ड इत्याकारकव्यवहारे केनचिन्निमित्तेन भाव्यम्। तच्च दिगेव। समानदिङ्मुखत्वे ऋजुरिति, नानादिङ्मुखत्वे वक्र इति च व्यवहारः। ''दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः'' 5-3-27 इत्यादाविदमेव लक्षणं घटते।

**4. साधनलक्षणम् -**

स्वाश्रये समवेतानां तद्वदेवाश्रयान्तरे।
क्रियाणामभिनिष्पत्तौ सामार्थ्यं साधनं विदुः ॥[8]

क्रियाया आधारभूतकर्तृकर्मणोः, तथेतरत्राधारेऽप्यविभक्तानां पाक-गमनादिव्यापाराणामुत्पत्तौ द्रव्यस्थां शक्तिं साधनमिति ब्रुवन्तीत्यर्थः। साध्यते अनेनेति साधनमिति व्युत्पत्त्या कारकस्यैव नामान्तरमिदम्। ''सार्वधातुके यक्'' 3-1-67 ''अतिशायने तमबिष्ठनौ'' 5-3-55 इत्यादिसूत्र[9]भाष्ये साधनस्य द्रव्यत्वेन व्यवहारो दृश्यते।

**5. क्रियालक्षणम्**

लोके क्रियापदेन परिस्पन्दरूपोऽर्थो गृह्यते। व्याकरणशास्त्रे तु एवं तल्लक्षणं प्रोक्तम् -

यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते।
आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते ॥[10]

अपाक्षीदित्यादौ निष्पन्नं, पचति, पक्ष्यतीत्यादौ उत्पाद्यं वा यद्यत् निष्पाद्यत्वेनाभिधीयते, आश्रितक्रमरूपत्वात् = आश्रितं क्रमरूपं यस्याः, पचतीत्यादौ क्रमेणोत्पन्नानां फूत्कारादीनां क्रमिकं रूपं समुदाये आरोप्यते सा क्रियेत्युच्यते। एवं च क्रियतेऽवयवानां क्रमेणोत्पत्त्या इति क्रियेति निष्कृष्टं लक्षणम्''। क्रिया नामेयमत्यन्ताऽपरिदृष्टा; अशक्या क्रिया पिण्डीभूता निदर्शयितुम्'' इति, ''कारकाणां प्रवृत्तिविशेषः क्रिया''[11]इति चोवाच भगवान् पतञ्जलिः।

**6. काललक्षणम् -**

''येन मूर्तीनामुपचयाश्चापचयाश्च लक्ष्यन्ते तं कालमित्याहुः'' इति महाभाष्यकारवचनम्। अयमेवाशयः,

मूर्तीनां तेन भिन्नानामाचायापचयाः पृथक्।
लक्ष्यन्ते परिमाणेन सर्वासां भेदयोगिना॥[12]

इति कारिकया प्रत्यपादि। तत्तत्पदार्थसम्बन्धिक्रियाविशेषैः जातभेदवता कालकृतेन परिमाणेन भिन्नानां सर्वमूर्तपदार्थानां वृद्धिनाशाः पृथक् लक्ष्यन्त इति तदर्थः।

**7. सङ्ख्यालक्षणम् -**

स धर्मो व्यतिरिक्तो वा तेषामात्मैव वा तथा।
भेदहेतुत्वमाश्रित्य सङ्ख्येति व्यपदिश्यते॥[13]

स धर्मः = सङ्ख्यारूपो धर्मः, व्यतिरिक्तो वा = द्रव्याद् भिन्नो वा, तथा द्रव्याणां स्वरूपमेव वा द्रव्याणां भेदकारणत्वमाधारीकृत्य सङ्ख्येति कथ्यत इति तदर्थः।

**8. लिङ्गलक्षणम् -**

स्तनकेशादिसम्बन्धो विशिष्टा वा स्तनादयः।
तदुपव्यञ्जना जातिर्गुणावस्था गुणास्तथा॥
शब्दोपजनितोऽर्थात्मा शब्दसंस्कार इत्यपि।
लिङ्गानां लिङ्गतत्त्वज्ञैर्विकल्पाः सप्त दर्शिताः॥[14]

(अ) स्तनकेशादिसम्बन्धः (आ) सम्बन्धविशिष्टाः स्तनादयः (इ) स्तनाद्युपव्यञ्जकवती जातिः (ई) सत्त्वादिगुणानामवस्था (उ) सत्त्वादिगुणाः (ऊ) शब्दप्रयोगमात्रजनितार्थस्वरूपम् (ऋ) शब्दसंस्कार इत्येवं सप्तविधं लिङ्गलक्षणं लिङ्गतत्त्वज्ञैः प्रदर्शितमिति प्रकृतकारिकाद्वयार्थः।

**9. पुरुषलक्षणम्**

''युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः'' 1-4-105 ''अस्मद्युत्तमः'' 1-4-107 शेषे प्रथमः'' 1-4-108 इति त्रिभिः सूत्रैर्युष्मदस्मदोः सामानाधिकरण्ये मध्यमोत्तमौ, तदभावे प्रथमश्चोक्तः। पाणिनीये प्रथममध्यमोत्तम इत्येव तत्तत्सूत्रेषु व्यवहारो दृश्यते। ''पुरुष'' इति योजनं प्राचीनव्याकरणानुसारेण। नवभिः कारिकाभिः ''पुरुष'' विषयकतया

व्याख्यातं वाक्यपदीये।

**10. उपग्रहलक्षणम् -**

य आत्मनेपदाद्भेदः क्वचिदर्थस्य गम्यते।
अन्यतश्चापि लादेशान्मन्यन्ते तमुपग्रहम्॥[15]

लडादिस्थान आदेशभूतादात्मनेपदात् परस्मैपदाद्वा यत्रार्थभेदो गम्यते स उपग्रह इति प्रकृतकारिकार्थः। क्रियाफलस्य कर्तृगामित्वे आत्मनेपदमिति, परगामित्वे परस्मैपदमित्यादिरीत्या तत्तदर्थविशेषस्य 'उपग्रह' इति व्यवहारः।

**समीक्षा**

एतावता प्रबन्धेन वैयाकरणसमाश्रिताः स्वीया दश पदार्था न्यरूप्यन्त। अत्र किञ्चित्समीक्षणीयम्। पाणिनीये सर्वत्राप्येतैरेव स्वपरिभाषितैः पदार्थैर्व्यवहारो न दृश्यते, किन्तु क्वचित्प्रदेशेष्वेव। अतस्तत्तल्लक्ष्यानुसारेण नैयायिकादिपदार्थलक्षणान्यप्यत्र समाद्रियन्त एव। यथा (1) "विप्रतिषिद्धं चानाधिकरणवाचि" 2-1-30 इत्यादौ द्रव्यपदार्थः (2) "तृतीया तत्कृतार्थेन गुणवचनेन" 2-1-30 (3) "अजादी गुणवचनादेव" 5-3-58 इत्यादौ गुणपदार्थश्च नैयायिकोक्तलक्षणलक्षितः स्वीक्रियते। 'संक्षेपेण विचार्यत' इति प्रबन्धस्यास्य आदौ प्रतिज्ञातत्वेन तद्भङ्गभिया समाप्यते॥

---

1. "तर्कसङ्ग्रहः" पृष्ठे - 3
2. "वाक्यपदीयम्" सम्बन्धसमुद्देशे कारिका -88
3. Ibid भूयो द्रव्यसमुद्देशे कारिका - 1,2
4. Ibid भूयोद्रब्यसमुद्देशे कारिका - 3.
5. Ibid गुणसमुद्देशे कारिका -1.
6. A. "पातञ्जलं महाभाष्यम्" (द्वितीयोऽध्यायः) पृ. - 51-52.
   B. "व्याकरणमहाभाष्यम्" (द्वितीयः खण्डः) पृ. - 538.
7. Ibid दिक्समुद्देशे कारिका - 2,3.
8. Ibid साधनसमुद्देशे कारिका -1.
9. A. "व्याकरणमहाभाष्यम्" (द्वितीयः खण्डः) पृ. - 92-94.
   B. Ibid पृ. - 612 - 621.
10. "वाक्यपदीयम्" क्रियासमुद्देशे कारिका - 1.
11. "पातञ्जलं महाभाष्यम्" द्वितीयोऽध्यायः पृ - 166.
12. "वाक्यपदीयम्" कालसमुद्देशे कारिका - 13.
13. Ibid सङ्ख्यासमुद्देशे कारिका - 2.
14. Ibid लिङ्गसमुद्देशे कारिका - 1,2.
15. Ibid उपग्रहसमुद्देशे कारिका 1.

# दैवीसम्पत्

डा. तट्टा विजयराघवाचार्यः
वरिष्ठव्याख्याता

सर्वोपनिषदां सारभूतं गीताशास्त्रम्। अष्टादशाध्यायात्मिका भगवद्गीता तत्त्वहितपुरुषार्थाः इति अर्थत्रयं बोधयति। जीवात्मपरमात्मनोः स्वरूपं तत्त्वम्। परमात्मप्राप्तेः उपायः हितम्। निरतिशयानन्दप्राप्तिः पुरुषार्थः। आनन्द प्राप्तिरेव परमात्मप्राप्तिः। भगवद्गीता योगशास्त्रम्। तस्मिन् योगशास्त्रे षोडशोऽध्यायः दैवासुरसंपद्विभागयोगः। दैवी सम्पत्, आसुरी सम्पत् इति विभागः। देवसंबंधिनी संपत् दैवी, भगवदाज्ञानुवृत्तिरिति यावत्। दैवी सम्पत् क्रमेण भगवत्प्राप्तये भवति। दैवीसम्पन्नानां शास्त्रवश्यत्वं प्रसिद्धम्। शास्त्रवश्यानां दैवीसंपन्नानां गुणाः एवमुक्ताः —

अभयं सत्त्वसंशुद्धिः ज्ञानयोगव्यवस्थितिः।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्॥
अहिंसा सत्यमक्रोधस्त्यागश्शान्तिरपैशुनम्।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम्॥
तेजः क्षमा धृतिश्शौचमद्रोहो नातिमानिता।
भवन्ति संपदं दैवीमभिजातस्य भारत॥ इति।

भयनिवृत्तिः अभयमित्युच्यते। भयं नाम इष्टानिष्टवियोगसंयोगरूपस्य दुःखस्य हेतुदर्शनजं दुःखम्। सत्त्वगुणप्रधानस्य मनसः समीचीना शुद्धिः सत्त्वसंशुद्धिः। सकलदोषनिवृत्तिरिति यावत्। के च ते दोषाः इत्युक्ते, रजस्तमोभ्यामुत्पन्नाः कामक्रोधादयः। कामरागासूयावञ्चनादिदोषाणां कारणभूताभ्यां रजस्तमोभ्याम् अस्पृष्टत्वमेव सत्त्वसंशुद्धिः। प्रकृतिवियुक्तात्मस्वरूपविवेकनिष्ठाः ज्ञानयोगव्यवस्थितिरित्युच्यते। ऋजुमार्गार्जितधनस्य पात्रे प्रतिपादनं दानम्। मनसः विषयौन्मुख्यनिवृत्तिसंशीलनं दमः। अभ्यासवैराग्याभ्यां मनोनिग्रहः सिद्ध्यति। फलाभिसन्धिरहितभगवदाराधनरूपमहायज्ञाद्यनुष्ठानं यज्ञः। सविभूतेः भगवतः तदाराधनप्रकारस्य च प्रतिपादकः कृत्स्नो वेद इत्यनुसंधाय वेदाभ्यास प्रवृत्तिः स्वाध्यायः। कृच्छ्रचान्द्रायणद्वादश्युपवासादेः भगवत्प्रीणनकर्मयोग्यतापादनस्य करणं तपः। अत्र द्वादश्युपवासो नाम एकादश्युपवास एव। एकादश्युपवासादपि द्वादशी समाराधनमेव मुख्यं भवति।

एकादश्यां निराहारः कर्तव्यं भोजनद्वयम्।
रात्रौ जागरणं चैव दिवा च हरिकीर्तनम्॥

तपसा शुद्धस्यैव भगवदाराधने अधिकारः। परेषु मनोवाक्कायवृत्तीनामेकनिष्ठता आर्जवमुच्यते। परपीडावर्जनम् अहिंसा। केचन मूर्खाः परपीडनाय आत्मपीडनं करिष्यन्ति। तदपि वर्जनीयमेव।

दृष्टार्थगोचरभूतहितवाक्यं सत्यम्। परपीडाफलचित्तविकाररहितत्त्वम् अक्रोधः। आत्महितप्रत्यनीकपरिग्रहविमोचनं

त्यागः। इन्द्रियाणां विषयप्रावण्यनिरोधसंशीलनं शान्तिः। परानर्थकरवाक्यनिवेदनाकरणम् अपैशुनम्। सर्वभूतेषु दुःखासहिष्णुत्वं भूतदया। विषयेषु निस्पृहत्वम् अलोलुप्त्वम्। अकाठिन्यं साधुजनसंश्लेषार्हता। अकार्यकरणे व्रीडा ह्रीः। स्पृहणीयविषयसन्निधावचञ्चलत्वम् अचापलम्। दुर्जनैः अनभिभवनीयत्वं तेजः। परनिमित्तपीडानुभवे ि परेषु तं प्रति चित्तविकाररहितता क्षमा। महत्यामप्यापदि कृत्यकर्तव्यतावधारणं धृतिः। बाह्यान्तः करणानां कृत्ययोग्यता शास्त्रीयाशौचम्। परेष्वनुपरोधः अद्रोहः परेषु स्वच्छन्दवृत्तिनिरोधरहितत्वम्। अस्थाने गर्वोऽतिमानित्वं, तद्रहितता नातिमानिता।

एते सात्त्विकाः गुणाः दैवीसंपदभिजातस्य भवन्ति। देवाः भगवदाज्ञानुवृत्तिशीलाः। तेषां संपत् दैवी संपत्। सा च भगवदाज्ञानुवृत्तिरेव।

# प्रजापतिः वरुणः इन्द्रः

डा. ए. श्रीपादभट्टः
व्याख्याता

भारतीयज्योतिःशास्त्रे रव्यादिशनिपर्यन्तं सप्तग्रहैः प्राधान्येन फलनिरूपणं महर्षिभिर्विहितम्। छायाग्रहयोः राहुकेत्वोरपि कैश्चित् विद्वद्भिः फलं समभिहितं स्वग्रन्थेषु। यद्यपि मान्दिः, यमकण्टकः इत्यादीनां रव्यादीनामुपग्रहाणां नामग्रहणं क्वचिद्ग्रन्थेषु दृश्यते किन्तु तेषां फलविषये प्राधान्यं नास्तीत्येव वक्तुं शुक्रमः। पाश्चात्यज्योतिश्शास्त्रपण्डितैः हर्षल्-नेप्ट्यून्-प्लूटो (Harshal, Neptune, Pluto) इति नूतनग्रहत्रयं आविष्कृत्य फलनिरूपणमपि विधीयते। एतेषामपि त्रयाणां ग्रहाणां प्रभावः जगति त्ववश्यमस्तीति ते विश्वसन्ति। एतेषां त्रयाणां ग्रहणां स्वरूप - स्थान - फल - प्रभृतीनां निरूपकाः ग्रन्था अपि प्रादुरभूवन्। भारतीयाः केचनाधुनिका विद्वांसः हर्षल् - नेप्ट्यून् - प्लूटो इति इमान् ग्रहान् क्रमेण प्रजापतिः, वरुणः, इन्द्रः इति संज्ञाभिः अभिदधति। पाश्चात्यानां मतानुरोधेन अस्य ग्रहत्रयस्य यत्फलनिरूपणं विहितं तत् समासतया प्रस्तूयते।

प्रजापतिः (Harshal) - एषः ग्रहः सूर्यात् 1785000000 मैलात्मके दूरे भ्रमति। वायुप्रकृतिकस्यास्य ग्रहस्य कुम्भराशिः स्वक्षेत्रं भवति। बुधः मित्रं कुजश्चास्य वैरी। तुलामिथुनराशिसञ्चारः शुभः। मन्त्र-तन्त्र-क्रान्ति - गूढप्रवृत्ति विप्लवादीनामेषः कारकः। येन ग्रहेण युतः तस्य फलं वर्धयति। एषः पापग्रहः। शनिप्रजापतियोगः बन्धनपदत्यागादिकं दुष्टं फलं वितनोति। अस्य कुजयोगः चौर्यं, घातः दाहादिकं सूचयति। रविसकाशात् नवमभावस्थितः एषः महाभाग्यकारको भवति। अस्य राहुयुतिः अपमृत्यु - सर्पदंशादिकं सूचयति। जलराशिषु, अग्निराशिषु च स्थितः प्रजापतिः अशुभफलमेव सामान्यतया विदधाति। जन्मकाले कुम्भस्थितः प्रजापतिः जातकं गुप्तविद्यानिपुणं मिथुनस्थितः महामेधाविनं, धनुषि स्थितः क्रीडासु निपुणं च करोति। लग्नस्थितः बलिष्ठो भवति। जन्मकाले लग्नादि भावस्थितः प्रजापतिः एवं फलं वितनोति - द्वितीये - अस्थिरसम्पत्, तृतीये - कलहः, चतुर्थे - वृद्धिः, पञ्चमे - मेधा, षष्ठे - रोगः, सप्तमे - दाम्पत्यवैपरीत्यम्, अष्टमे - गूढमृत्युः, नवमे - भाग्योपचयः, दशमे - अधिकारलाभः, अनिरीक्षितपदत्यागश्च, एकादशे - सम्पत्, द्वादशे - विदेशयात्रा। प्रजापतिग्रहः ज्योतिर्विद्याकारकोऽपि निर्दिष्टः पाश्चात्यैः विपश्चिद्भिः। शुभग्रहैर्युक्तः शुभफलं प्रयच्छति।

वरुणः (Neptune) - एषः ग्रहः सूर्यात् 2797000000 मैलात्मके दूरे भ्रमति। मीनराशिः स्वक्षेत्रं, शुक्रः सुहृत्, शनिः शत्रुः। अस्य गुरुचन्द्रयोः सामान्याः गुणधर्माः भवन्ति। अस्य कुजयुतिः अशुभा। रवियोगः शुभफलदः। वेदान्तविद्याकारकः एषः भवति। गुरुणा सह मीने स्थितः महोयोगकारको भवति। जन्मकाले बुधयुक्तः एषः जातकं वाग्मिनं विदधाति। चन्द्रयुतिः मनोबलं प्रयच्छति। जन्मकाले प्रथम - तृतीय - पञ्चम - नवमस्थितः वरुणग्रहः शुभफलं वितनोति। द्वितीये दारिद्र्यं, षष्ठे व्यसनं, सप्तमे भार्यानाशं, अष्टमेऽकालमरणं, दशमे मध्यवयसि भाग्यं, एकादशे अस्थिरविभूतिं तथा द्वादशे गुप्तशत्रुबाधां च प्रचच्छति। कर्क - मीन - मिथुन - तुला - कुम्भराशिषु स्थितः शुभफलं प्रयच्छति।

इन्द्रः (Pluto) - एषः ग्रहः सूर्यात् 3670000000 मैलात्मके दूरे भ्रमति। अस्य शत्रुमित्रत्वादि विचारे महान् मतभेदो दृश्यते। स्वक्षेत्रविषयेऽपि महान् विवादः। किन्तु एषः अद्भुतग्रहः इति विषये सर्वेषां सहमतिर्वर्तते। एषः विप्लव - उत्साह - अद्भुतकारकः इति पाश्चात्यानां विदुषामभिप्रायोऽस्ति। अस्य शुभराशिस्थितिः, शुभ्रग्रहयोगः, केन्द्रस्थितिश्च शुभं विदधाति।

वैद्यः पुरोहितो मन्त्री दैवज्ञश्च चतुर्थकः।
द्रष्टव्याः प्रातरेवैते नित्यं श्रेयोऽभिवृद्धये॥

सप्तमाष्टमयोरन्यतरभावस्थितः कुजयुक्तः विवाहप्रतिबन्धको भवतीति केचन आमनन्ति। विशिष्टस्थानस्थितः विलक्षणं फलं प्रयच्छति। अनिरीक्षितधनलाभं, अनिरीक्षितमरणं, पदत्यागं च एष करोति।

एवमत्र केवलं संक्षेपरूपेण अस्य ग्रहत्रयस्य पाश्चिमात्यज्यौतिषिकानां मतानुरोधेन फलं विवृतम्। अद्यत्वे काले एतेषां ग्रहाणां फलनिरूपकाः ग्रन्थाः तत्र तत्रोपलभ्यन्ते। भारतीयपञ्चाङ्गेषु अपि एतेषां ग्रहाणां चाराः कैश्चित् विद्वद्भिः विलिखिताः समुपलभ्यन्ते। ज्योतिःशास्त्रस्य परिशोधनदृष्ट्या सर्वेऽपि इमे विचाराः स्वागतार्हा एव। प्राचीनतत्त्वैः सह नूतनविचाराणमपि समन्वयः शास्त्रस्यास्य विकासायैव भवति। रव्यादिग्रहैः सह एतेषामपि ग्रहाणां फलं जातकेषु यदि निरूप्यते तर्हि फलकथनं वैज्ञानिकं भवेत्। अस्य साधुत्वासाधुत्वविषये ज्योतिर्विदाम् अनुभव एव प्रमाणम्।

---

धीराः कष्टमनुप्राप्य न भवन्ति विषादिनः।
प्रविश्य वदनं राहोः किं नोदेति पुनः शशी॥

# डा. सर्वेपल्लि राधाकृष्णन् (1888-1975)

चक्रवर्ति रङ्गनाथः
शोधच्छात्रः

प्रबोधाय विवेकाय हिताय प्रशमाव च।
सम्यक्तत्त्वोपदेशाय सतां सूक्तिः प्रवर्तते ॥

**जन्म -**

डा. सर्वेपल्लि राधाकृष्णन् महोदयाः अष्टाशीत्यधिकाष्टशतोत्तरैकसहस्रतमे वत्सरे 1888, सितम्बर मासस्य पञ्चम दिनाङ्के तदानीन्तनसंयुक्त मद्रास् राज्ये तिरुत्तणि नामके प्रसिद्ध पुण्यक्षेत्रे सर्वेपल्लि वीरास्वामि-सीतम्मा दम्पत्योः द्वितीयात्मजत्वेन जन्म अलभन्त। 'सर्वेपल्लि' इत्याख्यः ग्रामः 'नेल्लूर्' मण्डले वर्तते। ततः एतेषां पूर्वजाः तिरुत्तणि प्रदेशमागत्य तत्रैव स्थिरावासमकल्पयन्।

**विद्याभ्यासः**

श्री. राधाकृष्णन् महोदयाः - प्रसिद्ध दिव्यक्षेत्रे तिरुपति नगरे "Lutheran Mission High Scnool" मध्ये पाठशाला-विद्यां समाप्य ततः वेलूर् नगरस्य Voorches College मध्ये Pre. B. A. उपाधिं लब्ध्वा (F.A.) Fellow Arts इति Course अकुर्वन्। अथ उन्नतविद्यामभ्यस्तुं मद्रपुरीस्थ Chiristian कलाशालां प्राविशन्। तत्र M. A. in Philosophy, (तत्त्वशास्त्रे) उपाधिं संपादितवन्तः। वस्तुतः बाल्यादपि आरभ्य तेषां पुस्तकैः अविनाभावः सम्बन्धः आसीत्। तेषां यौवनं सर्वं विज्ञानसमुपार्जने यापितम्। नवाधिकनवशतोत्तरैकसहस्रतमे वत्सरे (1909) स्वविद्याभ्यासं समापयन्।

**विवाहः**

विद्यार्थिदशायामेव, तेषां पञ्चदशतमे वयस्येव 'शिवकामम्मा' इत्याख्यया सह विवाहः अभूत्।

**पदव्यः**

1. नवाधिकनवशतोत्तरैकसहस्रतमे वत्सरे (1909) प्रथमतया PRESIDENCY कलाशालायां तत्त्वशास्त्रविभागे व्याख्यातृपदमलञ्चक्रुः। अष्टवर्षपर्यन्तं व्याख्यातृपदमधिष्ठाय ख्यातिमलभन्त।
2. षोडशाधिक नवशतोत्तरैकसहस्रतमे वत्सरे (1916) एतेषां पाण्डित्येन भृशमाकृष्टाः आङ्ग्लेयाः एतेषां दर्शनशास्त्रज्ञानं न केवलं विद्यार्थिनां कृते अपितु अध्यापकानां कृतेऽप्यावश्यकमिति विचिन्त्य एनान् राजमण्ड्रि उपाध्यायशिक्षणकलाशालां प्रति प्रैषयन्। ततस्ते अध्यापकानामपि अध्यापकाः, व्याख्यातॄणामपि व्याख्यातारः सञ्जाताः।
3. ततः 'मैसूर विश्वविद्यालये' एकविंशत्यधिकनवशतोत्तरैकसहस्रतमपर्यन्तं (1921) आचार्यपदं व्यभूषयन्।
4. Sir Austosh Mukherji महोदयाः, श्री राधाकृष्णन् महोदयानां तत्त्वशास्त्रपाण्डित्येन आकृष्टहृदयाः सन्तः एतान् कलकत्ता

कर्णस्त्वचं शिबिर्मांसं जीवं जीमूतवाहनः।
ददौ दधीचिरस्थीनि नास्त्यदेयं महात्मनाम्॥

विश्वविद्यालये श्लाघ्यास्पदं Visiting Professor of Philosophy (वेदान्तनैतिकाचार्य) पदव्यां नियोजितवन्तः। अत्रैव ते बहुकालं पाठयन्तः आसन्। अस्मिन्नेव काले अर्थात् 1926 संवत्सरे एते Manchester College of Oxford इति विश्वविख्यातकलाशालायां आचार्यपदवीमपि अलङ्कुर्वाणाः आसन्। अयं तेषां सुवर्णकालः। यतश्च 1929-30 मध्ये ते England, America, Oxford, Cambridge, Chicago प्रभृतिषु स्थितेषु विश्वविद्यालयेषु Visiting Professor. स्तरे गत्वा भारततत्त्वशास्त्रविषयान् अतिमधुरया गिरा भाषयित्वा प्राच्यप्रतीच्यजनान् प्रबोधितवन्तः।

5. एकत्रिंशत्यधिकनवशतोत्तरैकसहस्रतमे वत्सरे (1931) आन्ध्रविश्वविद्यालये कुलपतिपदं भूषयामासुः। तदानीं ते त्रयश्चत्त्वारिंशद्वर्षवयस्काः एव आसन्। कुलपतिपदे विद्यमानाः अपि प्रतिदिनं त्रिंशन्निमेषपर्यन्तं कक्ष्यां स्वीकुर्वन्तः आसन्। एतदेव माहात्म्यमध्यापकानाम्।

6. एकोनचत्त्वारिंशदधिकनवशतोत्तरैकसहस्रतमे वत्सरे (1939-40) Banaras हिन्दूविश्वविद्यालये कुलपतिपदमलञ्चक्रुः। कुलपतिपदमधितिष्ठन्तः, कलकत्तानगरे किंग् जार्ज् संस्थायां वेदान्ताचार्यपदवीं, Oxford विश्वविद्यालये प्राच्यमतसम्बन्धि Spalding Professorship आचार्य पदवीं च ऊढ्वा खण्डद्वये, विश्वविद्यालयद्वये च आचार्य पदव्यौ समकालेनैव निरुह्य असाधारणं गौरवं प्राप्तवन्तः।

7. सप्तचत्त्वारिंशदधिक नवशतोत्तरैकसहस्रतमे वत्सरे (1947) रष्यादेशं भारतस्य राजदूतरूपेण अगच्छन्। रष्यादेशस्य अध्यक्षैः साकं एतेषां गरिष्ठा मैत्री आसीत्।

8. पञ्चाशदधिक नवशतोत्तरैकसहस्रतमे वत्सरे (1950) भारतदेशस्य उपाध्यक्ष पदमलञ्चक्रुः।

9. द्विषष्ट्यधिक नवशतोत्तरैकसहस्रतमे वर्षे (1962) भारतदेशस्य सर्वोन्नतमध्यक्षपदमध्यतिष्ठन्। 1964 तमे संवत्सरे इमे राष्ट्रपतयः अस्माकं विद्यापीठं संदृष्टवन्तः। तत्र नितरां समतुष्यन् महानुभावा एते।

इत्थं श्री. राधाकृष्णन् महाशयाः उपाध्यायपदवीमारभ्य अत्युन्नत देशाध्यक्षपदवीपर्यन्तं क्रमशः समुन्नतिं प्राप्ता इति महदिदं प्रमोदकारणं समेषां भारतीयानाम्।

**ग्रन्थाः -**

श्री. राधाकृष्णन् महाशयाः अध्ययनकालादप्यारभ्य ग्रन्थान् अलिखन्। श्री विवेकान्दस्य उपन्यासाः, भावाश्च एतेषां स्फूर्तिप्रदायकाः प्रेरकाश्च आसान्। तेषांमार्गमप्यनुसृत्य विशिष्टान् ग्रन्थान् व्यलिखन्। मनीषिधौरेयैः एतैः भारतीयसंस्कृतिदीपिकाप्रदीपने बद्धादरैः भारतीयवेदान्तशास्त्रमधिकृत्य कृतानि भाषणानि वैदेशिकाः विपश्चितः समूर्धान्दोलनमश्लाघन्त। वाग्मिवरेण्याः बहुग्रन्थप्रणेतारश्च एते भारतीयसंस्कृतेः मूलस्तम्भभूताः। अनन्यसामान्यसर्वतोमुख वैदुष्यैः एतैः अशेषविद्वच्छिरोमान्यानि ग्रन्थरत्नानि विरचितानि। वाग्देव्यनुग्रहवशाद्वशीकृतसर्वशास्त्राणां राधाकृष्णन्महोदयानां वैदुष्यपूर्णैः भाषणैः प्रपञ्चे बहवो विश्वविद्यालयाः उपकृताः। किमपि मतमदूषयन्त एव भारतीयसम्प्रदायवैशिष्ट्यमुद्घोषयन्ति इमे विद्वत्तल्लजाः। इदमेव तेषां सामर्थ्यम्। एतैः महाशयैः लिखितेषु ग्रन्थेषु INDIAN PHILOSOPHY (भारतीयतत्त्वशास्त्रं) इति

ग्रन्थः सुप्रसिद्धः सर्वेषु खण्डेषु ख्यातश्च । ततः अन्ये केचन सुख्य ग्रन्थाः -

1. 1918 "Philosophy of Rabindranath Thagore.
2. 1920 "Regin of Religion in contemparary philosophy.
3. "The Religion we need.
4. The Heart of Hinduism
5. Ethics of Vedanta
6. Freedom and culture

तेषां भावपूर्णोपन्यासाः एकत्र सङ्कलय्य ग्रन्थरूपेण समायाताः । तेषु मुख्यतमाः —

1. The hindu view of Life
2. An Idealist of life
3. Eastern Religion and Western thought

इत्यादयः । एतेषु ग्रन्थरत्नेषु अत्यन्तं विशिष्टस्तु "Indian Philosophy" इति ग्रन्थः । अयं च भागद्वयात्मकः, एतेषां सर्वशास्त्रपाण्डित्यमत्र स्फुटं प्रतिभाति । केषाञ्चन लेखने एव सामर्थ्यं, केषाञ्चन च भाषणे एव सामर्थ्यं दृश्यते । किन्तु उभयत्र सामर्थ्यमेतेषां विषये स्पष्टं दृश्यते । महात्मागान्धि महोदयानां विषये अतीव प्रीतिः गौरवं च विद्येते । एकत्र गान्धिजीमहोदयानां वैशिष्ट्यं कथयन्तः आसन् । तत्र सभाध्यक्षः उपेक्षां प्रकटितवान् । अथाप्येते धैर्येण अवोचन् —

"Eyes without Sight, Brains without soul and Science without Philosophy" इति ।

द्वैताद्वैतविशिष्टाद्वैततत्त्वग्रन्थेषु विद्यमानान् विषयान् सर्वानपि स्वग्रन्थे व्यचारयन् । अद्वैतसिद्धान्त एव एतेषां प्रीतिरिति ज्येष्ठानामभिप्रायः । आगमेष्वपि एतेषां पाण्डित्यम् अनितरसाधारणम । 'अन्तर्यामिरूप परमात्मा एव उपास्यः, स एव श्रेष्ठतमः इति पाञ्चरात्ररहस्ये उक्तं विद्यते । तदेव ते उदाहृतवन्तः ।

रामानुजमतं सम्पूर्णं, तत्रस्थभेदं सर्वमपि अर्थात् तेङ्गलै, वडगलै इत्यत्र विषयेऽपि चर्चां कृतवन्त इति चेत् किमधिकं वक्तुं शक्यते ।

राधाकृष्णन् महोदयानाम् अमूल्याः सन्देशाः -

1. परमतगौरवम् । अहिंसा मार्गश्च ।
2. चिन्तया वर्धते विद्या ।
3. गतस्य चिन्तापेक्षया प्रकृतं दुःखं सोढ्वा धैर्येण पुरोगमनमेव कार्यम् ।
4. जात्या न किमपि सिद्ध्यति ।
5. मूढविश्वासः त्याज्यः इत्यादयः ।

इत्थं डा. सर्वेपल्लि राधाकृष्णन् महाशयाः विद्यार्थिदशायां भारतदेश सिद्धान्तान् सम्यक् ज्ञात्वा उपाध्यायवृत्त्या जीवनमारभ्य प्रसिद्धतत्त्वज्ञा इति विश्वे ख्यातिं लब्ध्वा न केवलं तत्त्वज्ञाः किन्तु राजनीतिज्ञाश्चेति स्वकार्यनिर्वहणेन ज्ञापयित्वा भारतदेशाभ्युदयाय नितरां प्रयतमानाः सन्तः पञ्चसप्तत्यधिक नवशतोत्तरैकसहस्रतमे वत्सरे (1975) एप्रिल् मासस्य सप्तदशे अहनि भौतिकशरीरं परित्यज्य कीर्तिशेषाःसंजाताः । एतेषां स्मरणापेक्षया भावानामाचरणमेव अस्माकं प्रथमं कर्तव्यम् ।

संसारे चेतनास्तत्र विद्वांसस्तत्र साधवः ।
साधुष्वपि स्पृहाहीनास्तेषु धन्या निराशयाः ॥

# धूमज्योतिस्सलिलमरुतां सन्निपातः

**प्रेमानन्दसाहुः**
शोधच्छात्रः

सुविदितचरमेव समेषां सुरभारत्यध्ययनरसिकानां यन्निखिलेऽस्मिन् संसारे प्रद्योतमानेषु गुणिगणाग्रगण्येष्वमरभारतीचरणसेवायां सततं निमग्नेषु संस्कृतविद्वत्प्रवरेषु महाकविकालिदासः कीदृशं स्थानं भजत इति। महाकविकालिदासेन विरचिते विप्रलम्भश्टङ्गारप्रधाने 'मेघदूते' पठ्यतेऽयं श्लोकः -

धूमज्योतिस्सलिलमरुतां संनिपातः क्व मेघः
सन्देशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः।
इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे
कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु॥ पू. मे. ५॥

धूम - तेजो - जल - वायूनां सम्मिश्रणो जडरूपो मेघः क्व? इत्यौत्सुक्यादविचारयन् यक्षः तं मेघं याचितवान्। यतः मदनातुराः चेतनाचेतनेषु स्वभावदीना भवन्ति। तस्मादचेतनं मेघं प्रति यक्षस्य याचना स्वाभाविकी एव स्यादिति भावः।

धूम-ज्योतिस्सलिलमरुतां सन्देशवाहिकशक्तिर्वर्तते न वा? यदि न वर्तते, तर्हि श्लोकस्यार्थः संगच्छते। यदि वर्तते इति सोदाहरणं प्रमाणीक्रियते, तर्हि कथं समन्वयः कार्य इति विभावनीयं विद्वद्भिः।

आदौ ज्योतिः स्वीक्रियताम्। ज्योतिरेव विज्ञानदृष्ट्या सर्वेभ्यः गतिमद्भ्यः वेगवत्तमम्। तेनैव ज्योतिषा अक्षिपलकनिक्षेपक्षणेन वार्ताः, चित्राणि द्रव्याणि च प्रेष्यन्तेऽस्माभिः। तद्यथा - दूरदर्शनम्, दूरवाणी, रेलयानम्, व्योमयानम्, संगणकयन्त्रादीनि। अत एव ज्योतिषः सन्देशवाहिकशक्तिर्वर्तत इति सिद्धम्।

द्वितीयस्तावन्मरुत्। अनिलस्य शक्तिस्तु सर्वैः ज्ञायतेऽनुभूयते च। वायुद्वाराऽपि वार्ताः, गीतानि, नाटकानि च प्रेष्यन्ते। बहुशीघ्रं ते गच्छन्ति। यथा वेतारयन्त्रम्, वेतारः। वायुतरङ्गमाध्यमेन तत् पलकेनास्मत्समीपमागच्छति। अस्माभिः श्रूयते। अत एव वायोरपि शक्तिर्वर्तते।

तृतीयः भवति धूमः। जलस्य सूक्ष्मरूपस्तथा प्रसिद्धः। अनेन बाष्पीयशकटं वेगेन प्रचलति। तेन शकटेन बहूनि द्रव्याणि, यात्रिणः, पत्राणि, अन्यानि यानानि च शीघ्रं बहुदूरं गन्तुं प्रभवन्ति। अत एव धूमस्यापि शक्तिर्वर्तते।

चतुर्थं भवति सलिलम्। जलमार्गेण जलयानानि प्रयान्ति। बहुभारपरिमितानि द्रव्याणि जलमाध्यमेन देशान्तरं प्रेष्यन्ते। जलादेव विद्युच्छक्तिरुत्पद्यते। येन रेलयानं चलति। अत एव जलस्यापि शक्तिर्वर्तते।

यद्येकैको शक्तिमान्, तर्हि द्रव्यचतुष्टयसमूहस्य मेघस्य कीदृशी शक्तिस्स्यादिति विभावयन्तु विज्ञाननिपुणा विद्वांसः। एवं सिद्धे सति यक्षस्य कथं प्रकृतिकृपणत्वं सिध्यति ? किञ्च तस्य प्रकृतिकृपणत्वं मेघयाचनसमये एव आसीद्वा ततः परमपि? मार्गवर्णने, अलकापुरीवर्णने च प्रकृतिकृपणत्वं नैव दृश्यते।

यद्युच्यते मोहत्वं तु क्षणकालं तिष्ठति। तदनन्तरं संज्ञानमागच्छति। अतः मार्गवर्णनादिकं सम्यक्तया कृतमिति। तत्रोच्यते-प्रकृतिकृपणत्वं यदि क्षणकालं तिष्ठति, तर्हि दूतयाचनासमये मोहवशतः कृतो दोषः संज्ञानावस्थायां कुतः न संशोधितः?

अतः एतस्मिन् विषये सर्वे विभावयन्तु सुधियः इति विनिवेद्य विरमामि।

---

इन्द्रियैरुपलब्धं यत् तत्तत्त्वेन भवेद्यदि।
जातास्तत्त्वविदो बालास्तत्त्वज्ञानेन किं फलम्?

# व्याकरणस्य दर्शनत्वम्

**कैलासचन्द्रदाशः**

शोधच्छात्रः

''आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'' इति श्रुत्या आत्मसाक्षात्कारस्यैव मोक्षहेतुत्वं समर्थितं, तादृशसाक्षात्कारसाधकानि वेदान्तादीनि शास्त्राण्येव दर्शनशास्त्रपदेन व्यपदेश्यानि। न तु पदसाधुत्वासाधुत्वसाधनेन शब्दसाक्षात्कारसाधकं व्याकरणशास्त्रं दर्शनपदव्यपदेश्यं भवेत्। इदमत्राकूतम् - यत्र शास्त्रेषु विशिष्याध्यात्मविषयाः प्रतिपादितास्सन्ति; तत्र प्रसङ्गादागतानां लौकिकानामपि विषयाणां विश्लेषणस्य तात्पर्यमध्यात्मविषय एव पर्यवस्यति चेत् तद् दर्शनशास्त्रपदव्यवहार्यतां समुपयातीति सम्प्रदायः। नैवम्भूतं व्याकरणशास्त्रम्। केवलमत्र पदसाधुत्वासाधुत्वव्याख्यानमेव विजृम्भत इति कथमस्य दर्शनत्वमिति संशीतिः कदाचित् विदुषोऽपि चेतसि मनाक् स्थानं लभेत। परन्तु शब्दस्यैव आत्मस्वरूपत्वेन व्याकरणस्यापि अध्यात्मज्ञानोपायभूतत्वात् दर्शनत्वे नास्ति सन्देहलेशः।

अयमाशयः -: [1]''सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्''। ''ब्रह्मैवेदं सर्वम्'' ''आत्मैवेदं सर्वम्'' इत्यादिभिः श्रुतिभिर्जगत्कारणस्य सत्यत्वमेकत्वं ब्रह्मत्वम्, आत्मत्वं च यथा प्रतिपाद्यते तथा ''वागेवार्थं पश्यति वागेवार्थं ब्रवीति वागेवार्थं निहितं सन्तनोति। वाच्येव विश्वं बहुरूपं निबद्धं तदेतदेकं प्रविभज्योपभुङ्क्ते'' ''ओमित्येदक्षरमिदं सर्वम्'' ''ओमिति ब्रह्म'' इत्यादिश्रुतिभिः शब्दस्वरूपतापि प्रतिपाद्यते इति शब्दब्रह्मैव जगत्कारणम्।

शब्दतत्त्वाख्यं ब्रह्म प्रथमं स्वलिङ्गं त्रिमात्रमोङ्कारं ततोऽक्षरसमाम्नायं ततः चतुरो वेदान् विरचय्य सर्वं जगद् व्यरीरचत्। इदमेव शब्दतत्त्वाख्यं ब्रह्मपदेन, सूक्ष्मप्रणवरूपं परब्रह्मपदेन च व्यपदिशन्ति प्राचीना विपश्चितः। तथा च श्रुतिः[2] ''एतद् वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः। तस्माद् विद्वानेतेनैवायतनेनैकतरमन्वेति'' इति। एतेनायतनेन परब्रह्मप्राप्तिसाधनेन ओङ्कारेण एकतरपरब्रह्मानुगच्छति नेदिष्ठं ह्यालम्बनं परब्रह्मणः यदोङ्कार इति तत्तात्पर्यम्। अत एव ''द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च तत्। शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति''। इति स्मृतिः। शाब्दिकैस्तु परं ब्रह्मैव शब्दब्रह्मपदेनोच्यते। शब्दब्रह्मप्राप्त्युपायत्वं च —

[3]''तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः।
तस्य प्रवृत्तितत्त्वज्ञस्तद् ब्रह्मामृतमश्नुते॥

इति कारिकया शब्दसंस्कारद्वारा व्याकरणस्यावगम्यते। शब्दसंस्कारस्य च सिद्धित्वं सिद्ध्युपायत्वात्। व्यवस्थितसाधुभावेन रूपेण शब्दे संस्क्रियमाणेऽपभ्रंशोऽपघातापगमात् धर्मविशेषाविर्भावे सति साधुशब्दप्रयोगज्ञानपूर्वकं तस्य शब्दब्रह्मणः प्रवृत्तितत्त्वं व्यवहारनिमित्तरूपं समस्तशब्दार्थकारणभूतं पश्यन्त्याख्यं यो जानाति स तद्द्वारा अविवृत्तं ब्रह्म प्राप्नोतीत्याशयः। एवञ्च व्याकरणस्य दर्शनत्वे न काचित् विप्रतिपत्तिः। व्याकरणदर्शनभूमिकाकाराः पण्डित श्रीरामाज्ञापाण्डेयास्तु— अत्र हि दर्शनमित्यस्य कोऽर्थः इति प्रथमं निर्णीयते। अयं हि दर्शनशब्दः भावसाधनः करणसाधनश्च। तत्र भावसाधनत्वे दृष्टिरित्यर्थः लभ्यते। करणसाधनत्वे तु दृश्यते = प्रत्यक्षीक्रियते, न तु अनुमीयते, नापि शब्दजन्यबोधविषयीक्रियतेऽनेनेति व्युत्पत्त्या दर्शनसाधनमित्यर्थः। एवं सति यैः यैः उपायैः दृश्यते ते सर्वेऽप्युपायाः दर्शनपदव्यपदिष्टा भवितुमर्हन्ति। भावसाधनत्वे तु —

[4]श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा च सततं ध्येय एते दर्शनहेतवः॥

इत्युक्त्या श्रुतिवाक्यश्रवणमन्तरा यत्किञ्चित् ग्रध्यमानं वस्तु दर्शनमेव भवितुं नार्हति इति कथं दर्शनपदव्यपदिष्टानां दर्शनपदव्यवहार्यता इति चेत्, उच्यते।

सर्वेषां दर्शनविदां मनसि सैव श्रुतिः साक्षात्परम्परया वा स्वीयं कार्यं विदधती वर्तत एव। तामन्तरा तस्याश्चितः प्रकाशस्य 'ख' पुष्पायमाणत्वात्। एवं च दर्शनहेतूनां दर्शकं प्रतिपादकं वा शास्त्रं लक्षणया दर्शनपदभाग् भवेदेव, किमुत करणसाधनत्वे। तथा च कर्मधारये सर्वं व्याकरणं दर्शनमेव भविष्यति। भावसाधनत्वे षष्ठीसमासे व्याकरणस्य दर्शनमित्यर्थः। तत्रापि व्याकरणपदेन ग्राह्यम्। तस्य दर्शनमित्यत्र कर्त्तरि षष्ठया समासे शास्त्रेण यत् दृश्यते तत् सर्वमपि दर्शनमेव भवेत्। अधिकरणस्य सम्बन्धत्वेन विवक्षाया षष्ठ्यन्तेन समासे तु व्याकरणशास्त्रे यत्परात्मनः तत्सम्बन्धिनो वा दर्शनस्य साधकं तदेव दर्शनं स्यात्। एवं सति उक्तासु व्युत्पत्तिषु यः कोऽपि व्याकरणसम्बन्धी विषयः स सर्वोऽपि दर्शनपदव्यपदेश्यः इति सिध्यति। अस्यां दशायां पञ्चानां वृत्तीनामन्येषां वा प्रकृतिप्रत्ययसन्धिसमासकारकादीनां सर्वेषां दर्शनत्वे न काचित् बाधा आपतिष्यति। तथा चेदं व्याकरणमपि दर्शनमिति कथयितुं शक्यते इत्याहुः।

1. छान्दोग्योपनिषत् (6-1)
2. प्रश्नोपनिषद् (5 प्र. 3 मं) 1
3. वा. प. ब्र. का. 133 कारिका
4. सांख्यप्रभा. (अ. १ सु. १.)

# साङ्ख्ये मोक्षस्वरूपम्

**रमाकान्तमिश्र**

आचार्य - द्वितीयवर्ष

विशालेऽस्मिन् प्रपञ्चे अनादिकालादेव आध्यात्मिक - आधिभौतिक - आधिदैविकैः त्रिभिः दुःखैः असकृत् प्रपीडितस्सन् सर्वोऽपि जनः मायाजनितसागरात् आत्मानमुद्धर्त्तुम् आत्यन्तिकसुखार्थं विलोकते कश्चिन्मार्गविशेषम् । स मार्ग दर्शनादेव जायते । अथ किं नाम दर्शनमिति जिज्ञासायां - दृश्यते परमपुरुषार्थात्मकमार्गः अनेनेति व्युत्पत्या दर्शनपदार्थ सिध्यति । षट्स्वपि दर्शनेषु महर्षिकपिलप्रणीतं तत्त्वज्ञानप्रतिपादकं सांख्यशास्त्रमाश्रित्य मोक्षस्वरूपं प्रतिपाद्यते ।

सांसारिकजीवनमस्माकमतीव दुःखपूर्णं स्यात् । जीवने कोऽप्यानन्दोऽस्माभिरनुभूयते । किन्तु स अपर्याप्तः । किन्तु सुखमतिक्रम्य दुःखमधितिष्ठति । सुखं तु क्षणिकमेव । दुःखं तु नित्यम् । अतः बौद्धमतानुसारं सांख्योऽपि समस्तानुभवः दुःखम इति निगदति । सत्त्वादित्रिगुणेषु तमोगुणः दुःखस्य प्रतिनिधित्वं कुरुते । प्रत्येकवस्तुषु तथाऽनुभवेष्वपि तमोगुणः सन्निहितः। अत प्रत्येकपदार्थः अनुभवश्च दुःखरूप एव । सुखप्राप्त्यर्थं क्रियमाणः प्रयत्नोऽपि दुःखदायी भवति । क्षणिकसुखस्यानन्तरं पूर्वं व दुःखमेव तिष्ठति । अतः दुःखात् मुक्तिप्राप्तिः मानवस्योद्देश्यम् ।

सांख्यानुसारं सांसारिकजीवनं दुःखत्रययुतम् । तानि तावत् आध्यात्मिकाधिभौतिकरूपाणि। एतेषु आध्यात्मिकदुःखं शारीरिकमानसिकरूपेण द्विधा भवति । वातपित्तकफनामकदोषत्रयविषयताद्वारा उत्पन्नं दुःखं शारीरिकम् । कामक्रोधलोभमोहभयेर्ष्याविषादादिजन्यं मानसिकं दुःखमिति उच्यते । एतानि सर्वाण्यपि दुःखानि आन्तरिकैः उपायैः साध्यानि, अतः आध्यात्मिकमित्युच्यते । बाह्योपायैः साध्यं दुःखं द्विविधम् आधिभौतिकम्, आधिदैविकं चेति । तयोः मनुष्यपशुपक्षि-सर्पवृक्षादिस्थावरैः उत्पन्नं दुःखमाधिभौतिकम् - यक्षराक्षसविनायकविग्रहादीनां दुष्टप्रभावेण जातं दुःखमाधिदैविकमित्युच्यते। सर्वेऽपि मनुष्याः दुःखात् निवृतिं सुखप्राप्तिञ्च अभिलषन्ति । केवलं सुखप्राप्तिरसम्भविनी । अतः दुःखनिवृत्यर्थं प्रयासः करणीयः। एवञ्च एतेषां त्रयाणां दुःखानामात्यन्तिकनिवृत्तिरेव मोक्षः ।

"दुःखत्रयाभिघातजिज्ञासा तदपघातके हेतौ" सुखदुःखे तु गुणेभ्यः उत्पद्येते । एतेषामनुभूतिः बुद्धौ अज्ञानेन आत्मा बुद्धेः स्वपार्थक्यं नावगच्छति । किञ्च बुद्धिं स्वाङ्गमिति मनुते । स वास्तविकं स्वभावं शुद्धबुद्धचैतन्यरूपं विस्मृत्य स्वशरीरमनोबुद्धीन्द्रियादीन् अवगन्तुं प्रारभते । यदा पुरुषः स्ववास्तविकस्वरूपमवगच्छति तदा इदमपि ज्ञातुं प्रभवति यत् मनोबुद्धिशरीरेभ्यः भिन्नोऽहमिति । तदा सः मुक्तो भवति । एतादृशं भेदज्ञानं मोक्ष इत्युच्यते । प्रकृतिपुरुषविवेकान्मुक्तिः इति भेददानस्य मुक्तिसाधनत्वमनुमन्यन्ते सांख्याः ।

सांख्यदर्शनानुसारं मोक्षस्य द्वे अवस्थे भवतः । जीवन्मुक्तिः, विदेहमुक्तिश्च । यदा आत्मा यथार्थज्ञानं प्राप्नोति तस्मिन् क्षणे स मुक्तो भवति । यद्यपि तस्य शरीरं प्रारब्धकर्मानुसारं कर्म करोति। पूर्वकृतकर्मणां फलस्वरूपं शरीरं किञ्चित्कालपर्यन्तं संसारमधितिष्ठति । अत्रोच्यते -

"सम्यग्ज्ञानाधिगमाद् धर्मादीनामकारणप्राप्तौ ।
तिष्ठतिं संस्कारवशाच्चक्रभ्रमवद् धृतशरीरः ॥"

---

अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि तस्य वर्धन्ते आयुर्विद्या यशो बलम् ॥

अयमेव संक्षेपेण जीवन्मुक्तेः सिद्धान्तः ज्ञानस्याभ्युदयकः। परन्तु शरीरं प्रारब्धकर्मवशात् चलति।

यथा नर्तकी दर्शकानां पुरतः स्वनृत्यं प्रदर्श्य प्रीणयति तथैव प्रकृतिरपि स्वभिन्नरूपं पुरुषं प्रदर्श्य सृष्टेः कार्यात् विरमति। तदुक्तम् —

''रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात्।
पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः'' ॥ इति।

वस्तुतः सांख्यदर्शनानुसारं यदि देशकालकार्यकारणानां च शृङ्खलायां बद्धस्यात्मनः मुक्तिर्न भवति, तर्हि सोऽपि नित्य इति नोच्यते। सांख्यानुसारं मोक्षप्राप्तिः तदा स्यात् यदा पुरुषः तत्तत्वमनुभवति, यतः स देशकालपरिधेः परिच्छिन्नः शरीरेन्द्रियमनोभ्यः भिन्नो भवति। स मुक्तः, नित्यः, अमर एव। एतादृशानुभूत्यनन्तरमपि आत्मा शरीरस्य मनसो वा विकारेभ्यः अप्रभावितो भवति। स आत्मा पुरुषो वा तस्य साक्षी भवति।

अतः प्रकृतेः चतुर्विंशतिपदार्थेभ्यः भिन्नोऽहमिति पुरुषः चिन्तयति, ''नाऽहं कर्ता नापि भोक्ता'' इति। तदा तस्य कैवल्यप्राप्तिर्भवति। कैवल्यं नाम केवलस्य भावः केवलपुरुषः। अतः यदा पुरुषः परमात्मना सह केवलमेकमेवावतिष्ठते, तदा तस्य अपवर्गः जायते। अत उच्यते सांख्यकारिकायाम् —

''प्राप्ते शारीरभेदे चरितार्थत्वात् प्रधानविनिवृत्तौ।
एकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति'' ॥ इति।

111015

# भगवदुपासनम्

**तट्टा श्रीनिवास सुदर्शनः**

आचार्य प्रथम वर्ष

''मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥''

श्रीमद्भगवद्गीतायां ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे राजविद्याराजगुह्ययोगनामके नवमाध्याये अन्तिमश्लोकः अयम्। विशिष्टाद्वैतसिद्धान्तप्रवर्तकाः श्री भगवद्रामानुजाचार्याः विशिष्टतया अस्मिन् श्लोके विद्यमानं भक्तिस्वरूपं स्वमतानुसारेण एवं रीत्या प्रकटयन्ति।

मयि - सर्वेश्वरेश्वरे, निखिलहेयप्रत्यनीककल्याणैकताने सर्वज्ञे, सत्यसंकल्पे, निखिलजगदेककारणे, परस्मिन् ब्रह्मणि, पुरुषोत्तमे पुण्डरीकदलामलायताक्षे, स्वच्छनीलजीमूतसंकाशे, युगपदुदितदिनकरसहस्रसदृशतेजसि, लावण्यामृतमहोदधौ, उदारपीवरचतुर्बाहौ, अत्युज्ज्वलपीताम्बरे, अमलकिरीटमकरकुण्डलहारकेयूरकटकभूषिते, अपारकारुण्य-सौशील्य-सौन्दर्य-माधुर्य-गाम्भीर्यौदार्यवात्सल्यजलधौ, अनालोचितविशेषाशेषलोकशरण्ये, सर्वस्वामिनि तैलधारावत् अविच्छेदेन निविष्टमना भव। तदेव विशिनष्टि मद्भक्तः -अत्यर्थं मत्प्रियत्वेन युक्तो मन्मना भवेत्यर्थः। पुनरपि विशिनष्टि, मद्याजी- अनवधिकातिशयप्रियमदनुभवकारितमद्यजनपरो भव। यजनं नाम परिपूर्णशेषवृत्तिः। औपचारिक सांस्पर्शिकाभ्यवहारिकादि सकलभोगप्रधानरूपो हि यागः।

यथा मदनुभवजनितनिरवधिकातिशयप्रीतिकारितमद्यजनपरो भवसि, तथा मन्मना भवेत्युक्तं भवति। पुनरपि तदेव विशिनष्टि, मां नमस्कुरु -

अनवधिकातिशयप्रियमदनुभवकारितात्यर्थप्रियाशेषशेषवृत्तावपर्यवस्यन् मयि अन्तरात्मनि अतिमात्रप्रह्वीभावव्यवसायं कुरु। मत्परायणः = अहमेव परमयनं यस्यासौ मत्परायणः। मया विना आत्मधारणासम्भावनया मदाश्रय इत्यर्थः। एवमात्मानं युक्त्वा मत्परायणः त्वमेवमनवधिकातिशयप्रीत्या मदनुभवसमर्थं मनः प्राप्य मामेवैष्यसि।

आत्मशब्दो हि अत्र मनोविषयः। एवं रूपेण मनसा मां ध्यात्वा मामनुभूय मामिष्ट्वा मां नमस्कृत्य मत्परायणो मामेव प्राप्स्यसीत्यर्थः। तदेवं लौकिकानि शरीरधारणार्थानि वैदिकानि च नित्यनैमित्तिकानि कर्माणि मत्प्रीतये मत् शेषतैकरसो मयैव कारित इति कुर्वन् सततं मत्कीर्तन-यतन-नमस्कारादिकान् प्रीत्या कुर्वाणो मन्नियाम्यं निखिलं जगत् धामच्छेषतैकरसमिति च अनुसन्धायाहरहरुक्तलक्षणमिदमुपासनमुपाददानो मामेव प्राप्यसि।

---

विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः॥

# चरमश्लोकार्थविवरणम्

तट्टा पार्थसारथिः
सम्मानितशास्त्री - तृतीय वर्षः

"सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥"

इत्ययं श्लोकः महाभारतस्य समग्रं सारं स्पष्टयति। अस्य श्लोकस्य चरमश्लोकः इति नामान्तरम् अस्ति। पिळ्ळै लोकाचार्यैः "मुमुक्षुप्पडि" इत्यस्मिन् ग्रन्थे श्लोकस्यास्य अर्थः स्पष्टं विवृतः। "श्रियः पतिप्पडि" इत्यस्मिन् तमिलुग्रन्थे संस्कृतवाक्यबाहुल्येन "यादृच्छिकप्पडि" इत्यस्मिन् ग्रन्थेऽतिसंग्रहेण, "परन्दपडि" इत्यस्मिन् ग्रन्थे अतिविस्तरेण, "तनिचरमम्" इत्यस्मिन् ग्रन्थे सुस्पष्टं विवृतः चरमश्लोकार्थः।

अस्य श्लोकस्य भावः स्पष्टं ज्ञायते - हे अर्जुन! सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज। अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि, मा शुचः इति कर्म - ज्ञान - भक्तियोगोपायसमाचरणाशक्तमत एव भगवत्प्राप्तिर्दुर्लभा इति मन्वानं दुःखाक्रान्तम् अर्जुनं प्रति अन्तिमोपायप्रतिपादनपरोऽयं श्लोक उक्तः। अतः चरमश्लोकः इति उच्यते।

अस्मिन् श्लोके पूर्ववाक्ये अधिकारिकृत्यमुच्यते। उत्तरवाक्ये उपायकृत्यमुच्यते। परमात्मनः उपायरूपेण स्वीकरणमेव अधिकारिणः कार्यम्। उपायभूतेन परमात्मना क्रियमाणं कर्मैव उपायकृत्यम्। पूर्ववाक्ये सर्वधर्मान्, परित्यज्य, माम्, एकं, शरणं व्रज इति षट् पदानि सन्ति। जनानां वाञ्छाफलसिद्धेः स्मृत्यादिषु उक्तान् साधनविशेषान् अनित्यफलप्राप्तिदायकान् सर्वधर्मान् त्यक्त्वा सर्वरक्षकं सदा रक्षकं देवतान्तरेभ्यः विलक्षणं सिद्धं परमचेतनं सर्वशक्तिमयं निरपायं सहायान्तरनिरपेक्षं वात्सल्य, सौशील्य, सौलभ्य, सौजन्यादिविशेषगुणैः प्रकाशवन्तं मामेकमेव उपायरूपेण शरणं व्रज इति पूर्ववाक्यार्थः।

उत्तरवाक्ये "अहं, त्वा, सर्वपापेभ्यः, मोक्षयिष्यामि, मा, शुचः" इति षट् पदानि सन्ति। सर्वेश्वरोऽहम्, सर्वज्ञोऽहम्, सर्वशक्तिमान् अहम्, स्वाधीन त्रिविध चेतनाचेतनस्वरूपस्थिति प्रवृत्तिः अहम्, मत्प्राप्तेः प्रतिबन्धक रूपेण विद्यमानेभ्यः सर्वपापेभ्यः, अविद्या, कर्म वासना, रुचि, प्रकृतिसम्बन्धेभ्यः मोक्षयिष्यामि। अस्मदाश्रयणमाहात्म्येन भवन्तं दृष्ट्वा पापानि सर्वाण्यपि स्वयमेव विनष्टानि स्युः। अद्यावधि भवान् आत्मरक्षणे एव तत्परः आसीत्। अतः मया मौनमाश्रितम्। संप्रति मम समाश्रयणेन भवतः सर्वं पापमालिन्यमपि अहमेव दूरीकरिष्यामि। अतः मा शुचः इति उत्तरवाक्यार्थः। एवं प्रकारेण उत्तरार्धे "अहम्" इति पदेन उपायभूतस्य सर्वेश्वरस्य स्वरूपं, "त्वा" इति पदेन निवर्तनीयानां पापानामाश्रयभूतं चेतनस्वभावं, "सर्वपापेभ्यः" इति पदेन निवर्तनीयानि पापकार्याणि, "मोक्षयिष्यामि" इति पदेन स्वयमेव अहं तानि पापकार्याणि दूरीकरिष्यामि इति, "मा शुचः" इति पदद्वयेन पापनिवृत्तिकार्यं शोकनिवृत्तिश्च प्रतिपादिताः।

इत्थं सर्वधर्मान् अपि परित्यज्य सर्वेश्वरमेव उपायरूपेण स्वीकर्तुमभिरुचिसिद्धिः बहुक्लेशसाध्या इति, अस्य श्लोकस्य ईश्वरस्वातन्त्र्ये एव तात्पर्यमिति, त्यागबोधे सति विश्वासजननं कष्टसाध्यमिति च आरम्भे एव भगवता अयं श्लोकः नोक्तः। कर्मज्ञानादयः कैङ्कर्यादिरूपेण अनुष्ठीयन्ते अतः न परित्यक्तव्याः। सर्वधर्मान् परित्यज्य पुरुषार्थस्य साधनानि एव सर्वेश्वर एव उपायरूपेण आश्रितानि चेत् सर्वेश्वर एव प्रतिबन्धकान् सर्वान् निवर्त्य मोक्षयिष्यतीति महाविश्वासेन उज्जीवनमिति, तादृशविश्वासाभावे जन्म निष्फलमिति, अतः भगवद्विश्वासः अत्यावश्यक इति चरमश्लोकस्य तात्पर्यम्।

---

परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम्।
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम्॥

# परमात्मनः अन्तर्यामित्वम्

पि.टि.जि. रङ्गरामानुजाचार्यः

शास्त्री-तृतीय वर्षः

"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत।
क्षेत्रक्षेत्रज्ञयोर्भावं यत्तद्ज्ञानं मतं मम॥ "

श्रीमद्भगवद्गीतायां क्षेत्रक्षेत्रज्ञविभागयोगनामके त्रयोदशेऽध्याये श्लोकोऽयं द्वितीयः। अनेन श्लोकेन परमात्मनः श्रीमन्नारायणस्य वैशिष्ट्यं; माहात्म्यं वैलक्षण्यं च ज्ञायते। अपि च सः चिदचिद्विशिष्टः इति; स एव भर्ता; स्वामी; ईश्वरः इति च ज्ञायते।

हे भारत ! सर्वक्षेत्रेषु क्षेत्रज्ञं मां विद्धि। क्षेत्रक्षेत्रज्ञयोः यत् ज्ञान तत् ज्ञानं मम मतमिति च विद्धि इति अस्य श्लोकस्य अन्वयः।

सर्वक्षेत्रेषु-देवमनुष्यादिसर्वक्षेत्रेषु वेदितृत्वैकाकारं क्षेत्रज्ञं भगवदात्मकमिति विद्धि। यथा क्षेत्रं क्षेत्रज्ञविशेषणतयैकस्वभावतया तदपृथक्सिद्धेः तत्सामानाधिकरण्येन निर्देश्यं तथा क्षेत्रं क्षेत्रज्ञं च परमात्मनः विशेषणतयैकस्वभावतया अपृथक्सिद्धेः सामानाधिकरण्येनैव निर्दिश्येते। पृथिव्यादि संघातरूपस्य क्षेत्रस्य; क्षेत्रज्ञस्य च भगवच्छरीरतयैकस्वभावतया भगवदात्मकत्वं काश्चन श्रुतयः इत्थमाहुः —

"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति स त आत्मा अन्तर्याम्यमृतः" इत्यारभ्य "यः आत्मनि तिष्ठन् आत्मनाऽन्तरो यम् आत्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति सत आत्मा अन्तर्याम्यमृतः" इत्यादयः। इदमेव सर्वक्षेत्रज्ञानामन्तर्यामितया अवस्थानं भगवतः तत्सामानाधिकरण्येन व्यपदेशहेतुत्वं च। अत्र "अहमात्मा गुडाकेश सर्वभूताशयस्थितः"; "न तदस्ति विना यत्स्यात् मया भूतं चराचरम्"; "विष्टभ्याहमिदं कृत्स्नं एकांशेन स्थितो जगत्" इति पुरस्तात् उपरिष्टात् अभिधाय मध्ये "आदित्यानामहं विष्णुः" इत्यादिना सामानाधिकरण्येन व्यपदिश्यते। ज्ञानमुक्तं तदेव उपादेयमिति अस्य श्लोकस्य सामान्यतात्पर्यम्। यदि विशेषेण अवलोकयामश्चेत् भगवत्तत्त्वमितोऽपि आमूलाग्रं सम्यक् अवगम्यते।वस्तुतः अत्र इदं तत्त्वं भवति यत् - अचिद्वस्तुनः चिद्वस्तुनश्च परस्य च ब्रह्मणः भोग्यत्वेन भोक्तृत्वेन ईशितृत्वेन च स्वरूपविवेकं काश्चन श्रुतयः एवमाहुः —

"अस्मान्मायी सृजते विश्वमेतम् तस्मिंश्चान्यो मायया सन्निरुद्धः"। "मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्"। "क्षरं प्रधानममृताक्षरं हरः"। "क्षरात्मानौ ईशते देव एकः"। अत्र अमृताक्षरं हरः इति भोक्ता निर्दिश्यते। प्रधानं भोग्यत्वेन हरतीति हरः। "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः"। "प्रधानक्षेत्रज्ञपतिर्गुणेशः"। "पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम्"। "ज्ञाज्ञौ द्वावजावीशनीशौ"। "नित्यो नित्यानां चेतनश्चेतनानां एको बहूनां यो विदधाति कामान्"। "पृथगात्मानं प्रेरितारं च मत्वा, भोक्ता भोग्यं प्रेरितारं च मत्वा जुष्टस्ततस्तेन अमृतत्वमेति"। "तयोरन्यः पिप्पलं स्याद्वत्ति अनश्नन् अन्यो अभिचाकशीति"। "अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् अजो ह्येको

न हि ज्येष्ठस्य ज्येष्ठत्वं गुणैर्ज्येष्ठत्वमुच्यते।
केतकीगुरुपत्रेभ्यो लघुपत्रस्य गौरवम्॥

जुषमाणोऽनुशेते जहात्येनां भुक्त भोगामजोन्यः'' इत्यादयः।

भगवद्गीतायामपि भगवता एवमेवोक्तं यथा —

''अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा''; ''अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्'' ''जीवभूतां महाबाहो ययेदं धार्यते जगत्''। ''सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम्''। ''कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्''। ''प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः। भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात्''। ''मयाध्यक्षेण प्रकृतिस्सूयते सचराचरम्। हेतुनानेन कौन्तेय जगध्दि परिवर्तते''। ''प्रकृतिं पुरुषं चैव विद्धयनादी उभावपि''। ''मम योनिर्महद्ब्रह्मा तस्मिन् गर्भं दधाम्यहम्। सम्भवस्सर्वभूतानां ततो भवति भारत'' इति जगद्योनिभूतं महद्ब्रह्म प्रकृत्याख्यं भूतसूक्ष्मं अचिद्वस्तु यत्तस्मिन् चेतनाख्यं गर्भं संयोजयामीत्यर्थः। अतः भगवत्सङ्कल्पकृतात् - चिदचित्संसर्गादेव देवादिस्थावरान्तानामचिन्मिश्राणां सर्वभूतानां सम्भवो भवति।

एवं भोक्तृभोग्यरूपेणावस्थितयोः सर्वावस्थावस्थितयोः चिदचितोः परमपुरुषशरीरतया तन्नियाम्यत्वेन तदपृथक्स्थितिरूपेण परमपुरुषस्य आत्मत्वेन अस्तीति अनेन श्लोकेन परमात्मा क्षेत्रक्षेत्रज्ञेयोः अन्तर्यामी इति च श्रुतिद्वारा सुस्पष्टं ज्ञायते।

# किं किं न साधयति कल्पलतेव विद्या

**सोमनाथ साहुः**
शास्त्री प्रथम वर्षम्

मानवजीवने किमत्यावश्यकम्? इति प्रश्नस्य समाधानं विद्या एव इति वक्तुं पार्यते। लोके विद्या एव ज्ञानज्योतिं प्रज्वलयति, अविद्यारूपं तमः अपहरति, दुर्गुणात् वारयति, सद्गुणं संचारयति, कीर्तिं प्रथयति, गौरवं विकासयति, यशो वितनोति। उक्तं हि भर्तृहरिणा —

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं
विद्या भोगकरी यशः सुखकरी विद्या गुरूणां गुरुः।
विद्या बन्धुजनो विदेशगमने विद्या परा देवता
विद्या राजसु पूज्यते न हि धनं विद्याविहीनः पशुः॥ इति।

'विद् ज्ञाने' इति धातोः विद्या शब्दः निष्पन्नः। ज्ञानं च लौकिकमलौकिकं चेति द्विविधं भवति। तयोरेव पराविद्या अपराविद्या इति नाम्नी स्तः। सम्पूर्णं वेदसाहित्यं ''अपरा विद्या'' इत्यभिधीयते। भूगोळ, खगोळ, विज्ञान, साहित्य, राजनीति, शिल्प, वाणिज्यादिः ''पराविद्या'' इति भण्यते। सत्यासत्यज्ञानं प्रथमया, अपवर्गप्राप्तिः द्वितीयया इति विद्याद्वयस्य फलम्।

अस्माकं साहित्ये विद्यायाः अतीव महिमा श्रूयते। विद्यया मनुष्यः विशिष्टो भाति। विद्यया मनुष्यस्य द्वितीयं जन्म भवति। तदा एव सः अधिकं शोभते। येषां विद्या न भवति ते वस्त्रभूषणालङ्कृता अपि सभामध्ये मूर्खताकारणात् न शोभन्ते, अधिगतविद्याः सर्वत्र शोभन्ते, पूज्यन्ते, सम्मान्यन्ते च। अत एवोच्यते -

**''स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते''** इति।

अपरिचिते प्रदेशे मनुष्यः विद्यया जनान् परिचितानिव निर्माति। विद्या मानवस्य भाग्यमपि विदधाति। सा देवतारूपिणी स्वयं प्रसन्ना सती मनुष्यं सफलं करोति। विद्याधनं केनापि चोरयितुं न शक्यते। दानेन धनं क्षयं भवति। परन्तु विद्यारूपस्य धनस्य दानेन वृद्धिर्भवति। तथा चोक्तम् —

न चोरहार्यं न च राजहार्यं न भ्रातृभाज्यं न च भारकारि।
व्यये कृते वर्धत एव नित्यं विद्याधनं सर्वधनप्रधानम्॥

विद्या मानवस्य किं किं साधयति? - इति चेत् विद्या मातृवत् संरक्षति, पितृवत् सत्पथं प्रदर्शयति, कान्तावत् सुखं ददाति मनो रञ्जयति कीर्तिं वितनोति च। दुर्गुणेभ्यः वारयति मनः पावयति च। अतः सा कल्पलतया उपमीयते। यदुक्तं -

मातेव रक्षति पितेव हिते नियुङ्क्ते कान्तेव चाभिरमयत्यपनीय खेदम्।
लक्ष्मीं तनोति वितनोति च दिक्षु कीर्तिं, **किं किं न साधयति कल्पलतेव विद्या**॥ इति।

अतः यदि मनुष्यः समाजोत्कर्षम् आत्मोत्कर्षं च वाञ्छति, तदा तेन विद्योपार्जनमवश्यमेव कर्तव्यम्। विद्यया एव शान्तिपूर्वकं सम्मानपूर्वकं च जीवितुं शक्नोति जनः। अतः मानवजीवने विद्या अत्यावश्यकी।

---

क्षणशः कणशश्चैव विद्यामर्थं च साधयेत्।
क्षणे नष्टे कुतो विद्या कणे नष्टे कुतो धनम्॥

# वाग्वर्धिनीपरिषदः (1995-96) वार्षिकवृत्तान्तः

भगवतः श्रीवेङ्कटेशस्यापारकृपया प्रतिष्ठापितस्यास्य राष्ट्रियसंस्कृतविद्यापीठस्य चतुस्त्रिंशतमे वत्सरे वाग्वर्धिनीपरिषदः वार्षिकवृत्तान्तः सविनयं सहर्षं च प्रस्तूयते। सरलमतिच्छात्राणां सम्भाषणपटुत्वाभिवृद्धये राष्ट्रियसंस्कृतविद्यापीठे वाग्वर्धिनीपरिषत् समारब्धा। ऐषमः परिषदियं पञ्चनवत्युत्तरैकोनविंशतितमे संवत्सरे अक्टोबर्मासे एकादशदिनाङ्के (11.10.95) विद्यापीठस्यास्य मान्यैः कुलपतिभिः श्रीमद्भिः प्रो. एस्. बि. रघुनाथाचार्यमहाभागैः दीपप्रज्वालनपूर्वकं समुद्घाटिता। परिषदः अस्याः मार्गदर्शकत्वेन व्याकरणविभागस्य वरिष्ठाध्यापकाः डा. जे. रामकृष्णमहोदयाः, विशिष्टाद्वैतवेदान्तविभागाध्यक्षाः डा. टी. वी. राघवाचार्यमहाभागाश्च कुलपतिभिः नियुक्ताः। किञ्च अस्याः परिषदः कार्यसञ्चालनाय व्याकरणाचार्यद्वितीयवर्षीयः छात्रः रमाकान्तमिश्रः, साहित्याचार्यप्रथमवर्षीया छात्रा पी. सुभद्रा च कार्यदर्शिरूपेण ऐककण्ठ्येन छात्रैः निर्वाचितौ। परिषत्संचालनसहायककक्ष्याप्रतिनिधिरूपेण आचार्यद्वितीयवर्षस्य के. रामलिङ्गेश्वरशर्मा, आचार्यप्रथमवर्षस्य वै. झान्सीराणी, शास्त्रितृतीयवर्षस्य के. नागराजरेड्डि, शास्त्रिद्वितीयवर्षस्य एन्. मल्लेशः, शास्त्रिप्रथमवर्षस्य जी.टी. बालभास्करः, प्राक्शास्त्रिद्वितीयवर्षस्य विश्वनाथस्वामी, प्राक्शास्त्रिप्रथमवर्षस्य वेङ्कटाचलपतिश्च निर्वाचिताः।

अस्याः परिषदः अधिवेशनं वर्षेऽस्मिन् प्रतिबुधवासरं सायं पञ्चनिमेषाधिक चतुर्वादने प्रचाल्यते। ऐषमः वाग्वर्धिनीपरिषदः समुद्घाटनाधिवेशनेन सह षोडशाधिवेशनानि सम्पन्नानि। तेषां विवरणं दीयतेऽत्र —

| अधिवेशन संख्या | दिनाङ्कः | अध्यक्षः | शास्त्रीयविषयः | सामान्यविषयः |
|---|---|---|---|---|
| 1. | 18-10-95 | डा. लक्ष्मीनरसिंह भट्टः | काव्यप्रयोजनम् | दैनन्दिनजीवने दूरदर्शनस्य प्रभावः |
| 2. | 25-10-95 | डा. जे. रामकृष्णः | व्याकरणप्रयोजनम् | छात्रजीवने राजकीयप्रभावः |
| 3. | 01-11-95 | डा. का. ई. देवनाथन् | तमसोऽतिरिक्तद्रव्यत्वखण्डनम् | सामान्यनागरिकविधानम् [Common Civil code] भारत उचितं न वा? |
| 4. | 08-11-95 | डा. राधाकान्तठाकूरः | राजयोगः | संस्कृतप्रचारोपायाः |
| 5. | 15-11-95 | डा. एम्. एल्. नरसिंहमूर्तिः | ब्रह्मणः जगत्कारणत्वम् | धूमपान-मादकद्रव्यनियन्त्रणस्याव-श्यकता |
| 6. | 22-11-95 | डा. एम्. शारदा | — | 1. Feasibility of Elections in Jammu & Kashmir<br>2. If I were a teacher |
| 7. | 29-11-95 | डा. सि. ललिताराणी | — | 1. విద్యావిధానము- ప్రైవేటీకరణ<br>2. నాకు నచ్చినకవి. |
| 8. | 06-12-95 | डा. आर्. एस्. त्रिपाठी | — | 1. राष्ट्रनिर्माण में हिन्दी की भूमिका<br>2. सन्त तुलसीदास |
| 9. | 13-12-95 | डा. आर्. एल्. एन्. शास्त्री | — | आशुभाषणम् |
| 10. | 20-12-95 | श्री. चक्रवर्तिरङ्गनाथन् (शोधच्छात्रः) | — | रसप्रश्नाः |
| 11. | 24-01-96 | डा. ए. श्रीपादभट्टः | — | संस्कृत उद्धरणवाक्यचर्चा [A discussion on Sanskrit Quotations] |

हस्तादपि न दातव्यं गृहादपि न दीयते।
परोपकरणार्थाय वचने का दरिद्रता॥

| | | | | |
|---|---|---|---|---|
| 12. | 31-01-96 | डा. का. ई. गोविन्दन् | — | 1. भगवद्गीताया महत्त्वम्<br>2. पुराणानां वैशिष्ट्यम्<br>3. शास्त्रे लोकन्यायाः |
| 13. | 07-02-96 | डा. के. रविशङ्करमेनोन् | — | अन्त्याक्षरी |
| 14. | 14-02-96 | डा. यस्. सत्यनारायणमूर्तिः | — | संस्कृतज्ञाः-आधुनिकसमाजः। |
| 15. | 22-02-96 | डा. टि. वि. राघवाचार्यः | — | संस्कृते हास्यकथाः |

"हासेन तु समापयेत्" इतीवान्तिमाधिवेशनं छात्राणां हासरसपूर्वकं समाप्तिमगात्। विद्यापीठस्य कुलसचिवैः डा. के. वी. रामकृष्णमाचार्यैः प्रार्थनामस्माकं सादरमङ्गीकृत्य सर्वाः व्यवस्थाः परिकल्पिताः। परिषदः कृते स्वतन्त्रप्रकोष्ठव्यवस्था, सम्भाषणसौकर्याय ध्वनिविस्तारकयन्त्रस्य व्यवस्था समुपकल्पिता तैः। छात्रेषु आनन्दोत्साहवर्धकेभ्यः कुलसचिवमहाभागेभ्यः भूयो भूयः कृतज्ञतां विज्ञापयामः।

विद्यापीठस्यास्य सम्माननीयैः कुलपतिभिः उद्यापनसमारोहे पुरस्काराणामभिवर्धनम् अस्मत्प्रार्थनया साह्लादं समुद्घोषितम्। तद्यथा - प्रथम पुरस्कारः रू 30 तः 50, द्वितीय पुरस्कारः रू.25 तः रू.30, तृतीयपुरस्कारः रू.15 तः रू.20 पर्यन्तमभिवर्धितम्।

किञ्च परिषदः उद्घाटनसमारोहदिवसे मान्याः कुलपतयः साप्ताहिकाधिवेशनेषु विजेतॄणां छात्राणां कृते प्रोत्साहनार्थं प्रतिकक्ष्यं पुरस्कारत्रयं समुदघोषयन्। पुरा सर्वासु कक्ष्यासु आहत्य पुरस्कारत्रयमेवासीत्। ऐषमस्तु आहत्य 21 पुरस्काराः इति छात्राः आत्मनः कृतकृत्यान् अभिमत्य कुलपतीन् अभिनन्दितवन्तः।

तत्तत्कक्ष्यानुसारं छात्रैः श्यामफलकेषु लिख्यमानानि सुभाषितानि अस्माभिः पञ्जीकृतानि। वत्सरेऽस्मिन् अध्यापकाः छात्राश्च नितरां संतृप्ताः परिषदाऽपि सर्वेऽपि कार्यक्रमाः यथासमयं निर्विघ्नतया सञ्चालिताः। एतदर्थं कुलपतिभ्यः, कुलसचिवेभ्यः, उच्चपदाधिकारिभ्यः, कर्मकर्तृभ्यः, सर्वेभ्यः छात्रेभ्यः कृतज्ञतापूर्वकं धन्यवादकुसुमाञ्जलीन् समर्प्य विरमावः।

— रमाकान्तमिश्रः — पि. सुभद्रा

कार्यदर्शिनौ

गुणैरुत्तुङ्गतां यान्ति नोच्चैरासनसंस्थिताः।
प्रासादशिखरस्थोऽपि काकः किं गरुडायते॥

# वाग्वर्धिनीपरिषत्

## वार्षिकोत्सवस्पर्धानां निवेदनम्

प्रतिवर्षमिव वर्तमानेऽब्देऽपि, वार्षिकोत्सवमुपलक्ष्य नानाविषयेषु प्रतियोगिताः समुपकल्पिताः। वाग्वर्धिनीपरिषदा विद्यापीठस्य छात्राणां कृते अधोनिर्दिष्टविषयेषु स्पर्धाः मार्च् मासे प्राचाल्यन्त।

**आयोजितस्पर्धाः**

**1. शास्त्रीय भाषणप्रतियोगिताः —**

अ. शास्त्रिस्तरः - साहित्यम्, व्याकरणम्, न्यायः, वेदान्तः, ज्यौतिषं च।
आ. आचार्यस्तरः - साहित्यम्, व्याकरणम्, न्यायः, वेदान्तः, ज्यौतिषं, शिक्षाशास्त्रं च।

**2. सामान्यविषये भाषणप्रतियोगिताः —**

अ. प्राक्शाशास्त्रिस्तरः - संस्कृतम्, हिन्दी, तेलुगु, आङ्ग्लं च।
आ. शास्त्रिस्तरः - संस्कृतम्, हिन्दी, तेलुगु, आङ्ग्लं च।
इ. आचार्यस्तरः - संस्कृतम्, हिन्दी, तेलुगु, आङ्ग्लं च।

**3. प्रतिभाप्रदर्शनस्पर्धाः —**

अ. अन्त्याक्षरी आ. समस्यापूरणम् इ. गीताव्याख्यानम्
ई. पुराणप्रवचनम् उ. रसप्रश्नाः (Quiz)

**4. कण्ठपाठस्पर्धाः —**

अ. प्राक्शास्त्रिस्तरः - शब्द - धातुरूपाणि आ. सर्वेषाम् - अष्टाध्यायी

**5. निबन्धलेखनम् —**

अ. प्राक्शाशास्त्रिस्तरः - संस्कृतम्, हिन्दी, तेलुगु, आङ्ग्लम्.
आ. शास्त्रिस्तरः - संस्कृतम्, हिन्दी, तेलुगु, आङ्ग्लम्.
इ. आचार्यस्तरः - संस्कृतम्, हिन्दी, तेलुगु.

उपरि निर्दिष्टस्पर्धासु विजेतृभ्यः छात्रेभ्यः 49 प्रथमपुरस्काराः, 53 द्वितीयपुरस्काराः, 55 तृतीयपुरस्काराः, 03 प्रोत्साहनपुरस्काराश्च प्रदत्ताः। एवं प्रतिबुधवासरं सायं प्रचाल्यमानेषु वाग्वर्धिनीपरिषदधिवेशनेषु अधिकतया भागग्रहीतॄणाम् उत्तमं भाषियितॄणां च छात्राणां कृते षट् प्रथमपुरस्काराः, पञ्च द्वितीय पुरस्काराः, चत्वारः तृतीयपुरस्काराः, पञ्च प्रोत्साहनपुरस्काराश्च प्रदत्ताः। तथा, गतवार्षिकपरीक्षासु सर्वप्रथममुत्तीर्णानां प्राक्शास्त्रि- शास्त्रि- आचार्य- शिक्षाशास्त्रि- शिक्षाचार्यच्छात्राणां कृते एकैकस्य शतं रूप्यकाणि, विशिष्य शिक्षाशास्त्रिकक्ष्यायां सर्वप्रथमच्छात्रायाः कृते सम्मान्यानां भूतपूर्वशिक्षाशास्त्रप्रवाचकानां डा. R.N. अर्लिकट्टि महोदयानां नाम्ना पञ्चशतं रूप्यकाणि च प्रादायिषत।

**डा. टि. वि. राघवाचार्यः**
मार्गनिर्देशकः

---

येषां हृदिस्थो भगवान् मङ्गलायतनं हरिः।
नित्योत्सवः सदा तेषां नित्यश्रीर्नित्यमङ्गलम्॥

# धरा तिरुपति, अभिवन्दन !

पंकज कुमा
शिक्षाचार्य

वेंकटेश के क्रोड अवस्थित,
धरा पावन तिरुपति, अभिवन्दन।
कलियुग में कल, छल बल संत्रासक,
वेंकटेश धरा का अभिवन्दन।

पदूमापति अनुज गोविन्दराज,
तिरुपति मध्य कर रहे विराज,
उनकें असीम आशीष पुण्य से
बढता जन का यश, बल, धन,
धरा पावन तिरुपति अभिवन्दन।

आता वर्ष में अवसर एकबार,
करते भगवन् पुष्करिणी में विहार,
नौकाविहार, वह अद्भुत क्षण,
हर कष्ट हरण होता उस क्षण,
श्रद्धा की गंगा उमडे ऐसे,
दीखते सिर्फ भगवन् - भगवन्।
धरापावन तिरुपति, अभिवन्दन।

पुष्करिणी-जल इतना पावन,
होता सब शाप, ताप नाशन,
इस कलुषित, पीडित जीवन में,
न शेष रहता किञ्चित् लाञ्छन,
शापग्रस्त वह धर्मगुप्त
पागल हो भटका करता था,
जनकनन्द उसकी यादों में,
दिन रात ही रोया करता था,
मिलने पर वह हो हताश
करने लगा आर्त - क्रन्दन,
जैमिनी का तब पा निर्देशन,
करवाया पुत्र का अबगाहन,

जो अच्छी हिन्दी, गुजराती, बंगाली या मराठी
सीखना चाहे, उन्हें संस्कृत तो सीखनी ही पडेगी। - महात्मा गांधी

पुष्करिणी की महिमा इतनी
सब पाप दूर हुआ तत्क्षण,
धरा पावन, तिरुपति अभिवन्दन।

पांडवतीर्थ पर एक दृष्टि,
होने पर जब समाप्त थी सृष्टि,
किसी तरह बंद संग्राम हुआ,
पाण्डव को ब्रह्महत्या का नाम लगा,
इसी तीर्थ में कर अवगाहन,
हुये उनके महापाप निवारण।

पापविनाशक सनकसनन्दन,
शुक्लद्वादशी के दिन अवगाहन,
कुमारतीर्थ वा तुम्बुरु तीर्थ
नागतीर्थ वा चक्रतीर्थ
जाबालितीर्थ या बालतीर्थ
वैकुण्ठ तीर्थ या शेषतीर्थ
तीर्थों की नगरी तिरुपति
सब दुःख का यह करता मोचन
सुख ला, शीतल करता लोचन
पश्चिमी हवा से पूर्णमुक्त,
पावनतावश यह मनभावन,
धरापावन तिरुपति, अभिवन्दन।

---

जो भरा नहीं भावों से, बहती जिसमें रसधार नहीं।
वह हृदय नही है, पत्थर है, जिसमें स्वदेश का प्यार नही॥ - मैथिलीशरण गुप्त।

# सत्संगति

**रघुवंश भूषण पाण्डेय**
शास्त्री-प्रथमवर्ष

यह मानवशरीर केवल परमात्मा की प्राप्ति के लिए ही मिला है। किन्तु भूलवश मानव अपने लिये एवं अपने उद्देश्य से विमुख होकर धन, मान, बड़ाई (प्रभुता) आदि नाशवान पदार्थों की प्राप्ति में इस अमूल्य निधि समय का दुरुपयोग करने लगा। और इसी से इसने ८४ लाख योनियों में एवं नरकों की तैयारी कर ली। जिस प्रकार एक अन्धा एक ८४ कमरों वाले घर में बन्द हो गया था। एक अन्धा था उसको किसी कारणवश, अपराधवश, सजा मिली। उसे एक ऐसे घर में बन्दकर दिया गया, जिस में ८४ कमरे थे और विशेषता यह भी कि सभी कमरे दूसरे से सम्पर्कित थे। और उस घर से निकलने का सिर्फ एक ही मार्ग था। अर्थात् एक ही द्वार था। वह अन्धा उन कमरों को पार करने लगा। वह दीवार के सहारे चलते हुये एक कमरें से दूसरे कमरे, दूसरे कमरें से तीसरे, इसी तरह वह जब ८४ वें कमरे को पार करने लगातो जिस हाँथ से दीवार का सहारा लिये हुये था उसी हाँथ से अपना सिर खुजलाने लगा। क्योंकि उसके सिर में खुजली होने लगी थी। और अन्तिम द्वार छोड़कर पुनः वह पहले कमरे से बाहर निकलने की कोशिश करने लगा। और इसी तरह यह जीव भी है जब इसको नाना प्रकार के विषय, मोह, मान, द्वारा की खुजली लग जाती है तो पुनः नाना प्रकार की योनियों का चक्कर लगाने लगता है। तो इस महान विपत्ति से बचने का अत्यन्त सुलभ उपाय है, सत्संगति। सत्संगति मिलने पर मानव (जीव) अपने जन्म का उद्देश्य पहिचान जाता है। तभी भूला भटका मानव परमात्मा की ओर बढ़ता है। अतः सांसारिक उलझनों को सुलझाने के लिए सत्संगति परम आवश्यक है। और जीवन का पूर्ण लाभ भी इसी में है। व्यक्ति जीवन में सब कुछ करता है, लेकिन जबतक उसके जीवन में सत्संग नही प्राप्त होता तब तक वह व्यक्ति अधूरा रहता है। ''सत्संगति'' है क्या चीज? इसके विषय में हमारे महापुरुषों ने कई प्रकार से व्याख्या की है जैसे - सत् = परमात्मा। अर्थात् जो परमात्मा का संग करा दे उसे सत्संगति कहते हैं। सतां संगतिः = सत्संगतिः। सतां = सज्जनानां संगतिः सत्संगतिः। अर्थात् सज्जनों की संगति को ही सत्संगति कहा गया है। अब प्रश्न होता है कि सज्जन किसे कहते हैं? तो महाभारत में एक श्लोक है कि -

कर्मण्येकं वचस्येकं मनस्येकं महात्मनाम्।
कर्मण्यन्यत् वचस्यन्यत् मनस्यन्यत् दुरात्मनाम्॥

अर्थात् जो मनुष्य पवित्र हृदय वाला एवं मन, वचन, कर्म से एक हो वही महात्मा (सज्जन) कहलाता है। श्री गोस्वामी तुलसीदासजी लिखते है कि -

बिनु सत्संग विवेक न होई। रामकृपा बिनु सुलभ न सोई॥

जिस प्रकार श्री मद्भागवत् में लिखा है कि -

भाग्योदयेन बहुजन्मसमार्जितेन, सत्संगमं च लभते पुरुषो यदा वै।
अज्ञानहेतुकृतमोहमदान्धकारनाशं विधाय हि तदोदयते विवेकः॥

श्री गोस्वामी तुलसीदासजी ने जो नवधा भक्ति श्री रामचरित मानस मे लिखे है। उन में पहली भक्ति को सत्संगति ही कहा है। जैसे ''प्रथम भगति सन्तन कर संगा। दूसरि रति मम कथाप्रसंगा''। यहाँ पर मै तो यही कहूँगा कि ''दुर्लभं मानुषं जन्म''।

चौ. - बड़े भाग मानुष तन पावा। सुर दुर्लभ सदग्रन्हिन्थगावा॥ रामचरित मा.

किन्तु आज मनुष्य अतीव अंधेरे में पड़ा है, उनको निकलना चाहिये। प्रकाश की खोज करनी चाहिये।

---

रूकना न तुम जब तक तुम्हारे श्वास का लवशेष है।
हिम्मत न हारो ऐ हृदय यह साधना का देश है॥ - शिवमंगलसिंह 'सुमन'

# धनवत्ता का अभिमान

**दिनेश मोहन जोशी**
प्राक शास्त्रि - प्रथम वर्ष

एक सेठ था। वह बहुत धनी था। वह प्रातः काल उठकर नदीं में स्नान करके घर आकर प्रातः काल का नित्य - नियम करता था। एक बार एक सन्त नदी के किनारे पर आए। उस समय सेठ वहां स्नान कर रहा था। संत जी बोले सेठ ! राम राम ! वह बोला नहीं, तो संत जी के फिर से बोलने पर भी सेठ ने राम नहीं बोला। सेठ ने समझा कि यह कोई मांगता है। इसलिए कहने लगा, हट ! हट! चल, हट यहाँ से। संत ने देखा कि अरे आज कल सेठ का अभिमान बहुत बढ़ गया है। भगवान का नाम भी नहीं लेता, मैं तो भगवान का नाम लेता हूँ और यह "चल, हट" कहता है। इन धनी आदमियों को बहम रहता है कि हमारे से कोई कुछ माँग लेगा। वह गरीब से, साधु से, ब्राह्मण से, राज्य से, लुटेरे और डाकुओं से डरते हैं। अपने बेटे पोते ज्यादा हो जाएंगे तो धन का बटवारा हो जाएगा, एक तरह से ऐसा भी उनकों डर लगता हैं।

संत बहुत दयालु थे, उन्होंनें सोचा कि इस अभिमानी को ठीक करना है। तो वे वैसे ही सेठ बनकर उस सेठ के घर पहुँच गये। सेठ जी के द्वारपाल ने कहा अरे! आज आप जल्दी कैसे आ गए? तो उन्होने कहा कि एक बहुरूपिया मेरा रूप धारण करके नदी के पास आ गया था, मैने सोचा घर जाकर सब को बता दूँ कि कहीं वह आकर गड़वड़ी न कर दे। इसलिए मैं जल्दी आ गया। तुम सावधानी रखना अगर वह आया तो उसे अन्दर मत आने देना।

सेठ घर पर जैसा नित्य नियम् करता था, वैसे वह सेठ बने हुए सन्त पुरुष नित्य - नियम पूजा पाठ करने लगे। कुछ देर बाद वह सेठ प्रतिदिन की तरह आया तो द्वारपाल ने रोक दिया, बोला - कहाँ जाते हो? हटो यहाँ से। तो सेठ बोला तुमने आज भांग पी ली है क्या? नशा आ गया है क्या? क्या बात है? तूँ नौकर होकर मालिक बनता है। द्वारपाल ने कहा - हट यहाँ से नहीं जाने दूँगा भीतर। तो सेठ ने अपने पुत्रों को आवाज दी - अरे बच्चों ! आज इसको क्या हो गया है। तों पुत्रों ने कहा - बाहर जाओ भीतर मत आना। अब क्या हुआ यहाँ पर जिसको पूछे, वही धक्का दे। सेठ ने देखा कि यह क्या तमाशा हुआ भाई? मेरे ही लड़के मुझे दरवाजे के भीतर ही नहीं आने देते। बेचारा इधर - उधर घूमने लगा।

अब क्या करे? बेचारे सेठ की कहीं नहीं चली तो उसने राजदरबार में रिपोर्ट कर दी कि इस तरह की आफत आ आ गई है। सेठ राज्य का गणमान्य आदमी था। जब राजा ने उसको इस हालत में देखा तो कहा, आज क्या बात है? लोटा और धोती लिए कैसे आए हो? तो सेठ बोला मेरे साथ क्या - क्या नहीं हो गया महाराज! मेरे घर में मेरी शक्ल का बहुरूपिया घुस गया है और मुझे बाहर निकाल दिया है। राजा ने कहा, अरे सेठ ! रोज तो चार घोड़ों की बग्घी में आया करते थे। आज आपकी यह दशा! राजा ने अपने आदमियों को कहा, कौन है वह? जाकर मालूम करो। तो नौकरों ने जाकर पता लगाया और घर वालों को पूछा, घर वालों ने कहा, अच्छा वह नकली सेठ राजमहल में भी पहुँच गया ! बिलकुल नकली आदमी है वह हमारे सेठ जी तो अन्दर हैं। नौकरों ने लौट कर राजा से कहा सेठ तो घर में विराजमान है। राजा ने आदेश दिया "अच्छा तुम

---

जिसके हृदय समीप है वही दूर जाता है।
और क्रोध होता उस पर हि जिससे कुछ नाता है। - जयशंकरप्रसाद

जाओ और सेठ को कहा कि राजा ने आप को बुलाया है'' । जैसे सेठ चारों घोड़ों की बग्घी लगाकर ठाट - बाट से जाते थे वैसे ही पहुँचे और बोले - 'अन्नदाता' । क्यों याद फरमाया । क्या बात है?

राजा यह देखकर चकित रह गए कि दोनों एक से दीख रहें हैं । राजा ने कहा अब पता कैसे चले कि असली कौन है और नकली कौन? तो संत ने कहा परीक्षा कर लो । जो संत बने हुए थे, उन्होंने कहा बही लाओ । बही मंगवाई गई । जो संत सेठ बने हुए थे, उन्होनें बिना देखे ही सब कुछ बता दिया । सेठ बेचारा देखता ही रह गया, वह कुछ न बता सका । इस से यह सिद्ध हो गया कि यह सेठ नकली है । तो राजा ने कहा कि - इसे दण्ड दो । पर संत के कहने से छोड़ दिया ।

दूसरे दिन फिर वह धोती और लोटा लेके नदी पर स्नान करने गया । वहाँ वही संत बैठे थे । उस सेठ को देखकर संत ने कहा - 'राम - राम'! तब उसकी आखँ खुली कि यह सब इस संत का चमत्कार है । संत ने कहा - 'तुम भगवान का नाम लिया करो । प्रत्येक का तिरस्कार, अपमान मत किया करो । जाओ, अब तुम अपने घर जाओ । वह सेठ सदा की तरह चुपचाप अपने घर आ गया ।

---

गोधन, गजधन, बाजिधन, रतनधन खान ।
जब आवै संतोष धन, सब धन धूरि समान ।। - महात्मा कबीरदास

# THEORY OF ERROR

*Dr. M. L. Narasimha Murthy*
Reader

The theory of error occupies an important place in Indian philosophy in general and in Advaita Vedanta in particular. Sankara discussed this theory at length in the beginning or his "Sutra Bhasya". Error arises because of the superimposition of one order of reality on another. There are three orders of reality according to Sankara i.e. Paramarthika, Vyavaharika and Prathibhasika. If the perceptable belongs to the same reality there will not be any error. On the other hand, if the two terms belong to two different orders of reality, we experience error. Seeing a snake in a rope, silver in the conchshell; a man where there is a trunk of a tree, are some of the examples. In all these cases, one thing is common i.c. the lower order of reality is superimposed on a higher order. Snake perceived in rope belongs to the lower order of reality i.c. Prathibhasika where as rope belongs to the higher order of reality i.e. Vyavaharika. But the existence of the snake is perecived by only an individual for a brief moment. In other words, it can be said that the existence of the snake is closely bound up with its perception by someone. It has no existence independently of its perception. It was neither existed before the perception, nor after the perception has come to an end. Therefore, it existed only at the moment of perception. In the swapna also dream objects belong to the same category i.e. Prathibhasika. We cannot dismiss such things as unreal because we perceive them. Unreal thing cannot be perceived such as sky - lotus, hare's horn etc. Such words have no corresponding objects in the real world. Hence Sankara concludes that whatever is perceived must be accepted so for the real.

The knowledge of the objects which are common to all, which belong to the empirical sphere cannot be contradicted. Most of the people do not go beyond this reality, for it is the highest reality. But according to Upanishads, the knowledge of Brahman, the Supreme reality contradicts the knowledge of empirical world which is characterised by diversity and change the reality of Brahman cannot be contradicted because it is very much the consciouness of one who contradicts it. Hence it is impossible to conceive the absence of consciousness at any stage. Even the denial of consciousness would affirm the consciousness as the denial also is a piece of knowledge. The highest spirit and pure knowledge therefore, is the highest reality which does not cease to exist at any time.

It is clear from the above observation that a lower order of reality is superimposed on a higher order (Prathibhasika) or phenomenal order is superimposed on the rope which belongs to the empirical order (Vyavaharika). This is called 'adhyasa' according to Sankara. The criteria for deciding the order is that whichever is contradicted by the other order, is lower order and the

"A mind not to be changed by place or time. The mind is in its own place, and in itself can make a Heaven of hell, a Hell of Heaven" - John Milton.

